5. 4. ब्रह्मौदनस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो″ ऽप्स्विति शालीकिः ′ ॥

नैवास्मिन्नाग्निष्वेन निःषिञ्चेदिति बौधायनः″ काममस्मिन्नाग्निष्वेव निःषिञ्चेदिति शालीकिर्″विषाय्य[१] तद्[१] सूपवन्तमित्यौपमन्यवः ′ ॥

6. 6. ब्रह्मौदनस्योपस्तरण इति ॥ सूत्रं बौधायनस्य″ नोपस्तृणीतेति शालीकिः ′ ॥

. 10 ब्रह्मौदनस्योद्वासन इति ॥ सूत्रं बौधायनस्यैव पर्युपविशेयुरिति[२] शालीकिः ′ ॥

. 12, ब्रह्मौदनस्योपोहन इति ॥ यज्ञो मोपनमत्विति वा तूष्णीं वेति ′ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ′ ॥

ib. ब्रह्मौदनस्य प्राशन इति ॥ आर्षेया एव ब्रह्मौदनं प्राश्नीयुरिति बौधायनो″ य एव केच नियतपाना[३] इति कात्यो″ ऽन्यो ह स्माहौपमन्यवो महर्त्विज एव ब्रह्मौदनं प्राश्नीयुर्′त्व[४] ह्येवैते[५] व्रतानुनयिनो भवन्तीति ′ ॥

---

१ Uncertain; विषाय्यतं U H Ben C D G (pr. m.), विषाय्य G (sec. m.); विषाय्यतं Bu; विषाय्य सु सुतं Be.

२ Thus Bu G and U (sec. m.); ॰पविशेरन्निति the other MSS.

३ Uncertain; निपाना H Ben G (sec. m.) C D; निपक Be; निपावना Bu; नियतपाना G (pr. m.) U; this seems to be the reading also of the vivaraṇa, according to which the meaning is: सहभोजनाः।

४ ॰चो Ben H G C and U (pr. m.).

५ After ॰वैते Be ins. प्रथमं, thus also Kes. in a citation of this passage.

I. 57.1. समिधामभ्याधान इति ॥ सूत्रꣳ शालीकिर्चो ह स्माह बौधायनः सकृत्प्राशिते ऽप्रत्यवसृष्टे समिधो ऽभ्यस्यादध्यादित्यौचो ह स्माहौपमन्यवो ऽवैतनाः पार्श्वतः समस्य सादयेत्तद्यदा सर्वं प्राश्नीयुरथैतां पात्रीं निर्णिज्योपसमीर्य यस्माज्यामाज्यमवशिष्टꣳ स्यात्तत्सहाद्भ्युन्नीय तेन समिधो ऽभ्यस्यादध्यादिति ॥

I. 57. 13. गोः करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिरपि वक्रीरपि कुर्वीतानु चैतस्य भवेत्पुण्या प्रशꣳसेति कात्यः ॥

I. 57. 15. अरण्योः प्रदान इति ॥ सूत्रमाचार्ययोर्चो ह स्माहौपमन्यवो ऽपरराञ्च एवास्मा अरणी प्रयच्छेदिदं ददामीत्येव वाचं विसृजेदिति ॥

I. 59 1. अग्न्यायतनानां परिलेपन इति ॥ सूत्रमाचार्ययोर्चो ह स्माहौपमन्यवो गार्हपत्यायतनमेवैकं परिलिम्पेत्तद्धि विदग्धं भवतीति ॥

I. 59. 2 संभाराणां निवपन इति ॥ सूत्रमाचार्ययोर्चो ह स्माहौपमन्यवो गार्हपत्यायतन एवैनान्सर्वैर्मन्त्रैः परिनिधाय द्वेधा निवपेदिति ॥ १६ ॥

I 62. 9. दर्भस्य हरण इति ॥ स ह स्माह बौधायनो जानुदघ्नं प्रथमꣳ हरेदथ नाभिदघ्नं ऽथ ग्रीवदघ्नं प्राणाꣳस्तु नातिहरेदित्यादिदान एवैता मात्रा अभिसंपादयेत्प्राणाꣳस्त्वेव नातिहरेदिति शालीकिः ॥

.18. संभाराणामाक्रमण इति ॥ सूत्रं शालीकेरन्यो ह स्माह बौधायन एवमेवैतेन पुरस्तात्प्रत्यगावृत्तेन[1] दक्षिणेन पूर्वपदेनोत्तरतः पार्श्वतः[2] संभाराणामाक्रमयेद्यथाहितस्याग्नेरङ्गारा अभ्यववर्तेरन्निति ॥

.20. अश्वस्य दान इति ॥ अध्वर्यव एतमग्निपदमश्वं[3] दद्यादन्यं ब्रह्मण इति बौधायन एतं[4] ब्रह्मणेऽन्यमध्वर्यव[4] इति शालीकिः ॥

3.1. इधास्य निधान इति ॥ सूत्रं बौधायनस्य तूष्णीमेवेधं निदध्यादिति शालीकिः ॥

13. सभ्यावसथ्ययोः करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

b. सभ्यावसथ्ययोर्विहरण इति ॥ आहवनीयादेवैनौ विहरेदिति बौधायनो ग्रामाग्नेरिति शालीकिर्निर्मन्थ्यौ स्यातामित्यौपमन्यवोऽन्यो ह स्माहौपमन्यवीपुत्रः सभायामेव सभ्यं व्यपदिशेदावसथ आवसथ्यं पर्वणि[5] चैनयो स्थालीपाकौ श्रपयित्वा ब्रह्मणे जुहुयादित्येतदपि न कुर्यादित्याश्मीगविः ॥

---

१ Thus G (see m.) D G, ॰हृतेन the other MSS.

२ Found only in Be and U (see m.).

३ पार्श्वं given only by Bu and G (see m.).

४ एवं instead of एतं Bu; the other MSS. are defective, leaving out एतं ब्रह्मणे।

५ पर्वणिपर्वणि U (see m.).

I.63.14. रथचक्रस्य करण इति॥ कुर्यादिति बौधायनो″ न
कुर्यादिति शालीकिर्″वो ह स्माहौपमन्यवो रथमेवैतत्
संयुक्तं[१] प्राञ्चं प्रवर्तयेत्तमृत्विग्भ्यो दद्यादित्य″तदपि न कुर्या-
दित्याज्ञौगविः′ ॥

I.64.9. तनूनामनुदेश[२] इति॥ प्रत्यधीत्यानुदिशेदिति[३] बौधा-
यनो″ यास्ते अग्ने घोरास्तनुवस्ताभिरमुं[४] गच्छेत्येव ब्रूया-
दिति शालीकिः′ ॥

I.64.11. विराजकर्मस्विति॥ सूत्रं बौधायनस्य″ नर्य प्रजां मे
गोपायेत्येव ब्रूयादिति शालीकिः′ ॥

I.65.2. पूर्णाहुत्यै हवन इति॥ सूत्रं बौधायनस्य″ परिश्रित एव
पूर्णाहुतिं जुहुयादिति शालीकिः′ ॥ १७ ॥

I.65.3. पूर्णाहुतौ तूष्णीमग्निहोत्र इति॥ सूत्रं रार्थीतराणा-
म्″वो ह स्माह बौधायनः पूर्णाहुतिमेव जुहुयान्न तूष्णी-
मग्निहोत्रमिति″ तूष्णीमग्निहोत्रमेव जुहुयान्न पूर्णाहुति-
मिति शालीकिः′ ॥

I.66.3. दशहोतुर्व्याख्यान इति॥ स ह स्माह बौधायनो यत्र
क्व च हविर्निर्वप्स्यन्स्यात्ताभिधेनीर्वानुवक्ष्यन्व्याचक्षीतैव तत्र दश-

---

१ Thus Bu Be G (sec. m.) and Keś, संप्रयुक्तं U H Ben C D G (pr. m.).

२ Thus Bu Ben H G C D; ०देशने the vivarana; ०देशेन Be.

३ Thus Bu U (pr. m.); प्रत्याधी० H Ben Be C D U (sec. m.).

४ Thus Be Bu U (sec. m.); यायातं instead of अमुं Ben G C D U (pr. m.) H.

होतारमित्येष्वेवैतदाग्न्याधेयिकेषु[1] तन्त्रेषु दृष्टं भवतीति शालीकिरग्निष्वेवैतदाग्नेये ऽष्टाकपाले दृष्टं भवतीत्यौपमन्यवः[1] ॥

6. 4. तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्नावाज्यभागावुच्चैर्देवता इत्यथो ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांश्वदेवता इत्यथो ह स्माहौपमन्यव आग्नेये ऽष्टाकपाले वार्त्रघ्नावाज्यभागौ स्यातां वृधन्वन्तावैन्द्राग्नादित्ययो[2] रयिमन्तौ[2] पुष्टिमन्तौ पवमानहविःषु वीतवन्ताववारम्भेष्वामिति[3] ॥

याजमानस्य करण इति ॥ अभीनाम[4] याजमानं कुर्यादिति बौधायनः ॥ कुर्याद्यथावकाशं याजमानमिति शालीकिः[1] ॥

---

१ Thus Bu G U (sec. m.); एष्वेवैतद॰ H; एष्वेतद॰ Ben U (pr. m.); एवैष्वेतद॰ Be, वेष्वेवैतद॰ D C.— ब्राम्याधे॰ H Ben Be U D G (sec. m.); ब्रम्याधे॰ Bu G (pr. m.).

२ ॰योर्रयिमंतौ C D U (pr. m.) Ben; ॰योरविमंतौ H; ॰यीरपिमंतौ Be; योरतिथिमंतौ Bu U (sec. m.). I am uncertain whether रयिमन्तौ or अतिथिमन्तौ is the right reading.

३ Thus Be Ben H C D G and U (pr. m.); पौषवंताव॰ Bu; इध्मवंताव॰ G and U (sec. m.).

४ अभीनर्म Be. The word seems to be absol. to अभिनमति ('to change accordingly'). Vivarana: अभिनाममोचित्वा, correct perhaps ॰मयूचित्वा ।

I. 66. 6 दक्षिणानां दान इति ॥ सूत्रꣳ शालीकेर''त्रो ह स्माह बौधायनः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्यांस्तिस्रस्तिस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति ' ॥

I. 66. 9. तन्त्रसमास इति ॥ नास्ति तन्त्रसमास आचार्ययोर''त्रो ह स्माहौपमन्यव आग्नेयो ऽष्टाकपालो ऽग्नये पवमानाय तत्प्रथमं तन्त्रꣳ स्यादथाग्नये पावकायाग्नये शुचये तद्द्वितीयमथैन्द्राग्न आदित्यश्च[1] चरुस्त्वं[१] परीयातामिति ' ॥

I. 67 15. दक्षिणानां दान इति ॥ सूत्रꣳ शालीकेराख्यातं बौधायनश्चो ह स्माहौपमन्यवः सर्वा एवैता इष्टीर्दक्षिणावतीः कुर्याच्चतस्रश्चतस्र एकैकस्यां दद्यान्मिथुनावुत्तमायामिति ' ॥

अनन्वारब्धदर्शपूर्णमासस्य प्रायश्चित्तकरण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

I. 67 18 अन्वारप्स्यामिति ॥ चतुर्होतारꣳ सारस्वतौ होमावन्वारम्भेष्टिमित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति बौधायनश्चतुर्होतारꣳ सारस्वतौ होमावित्येतदुपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादिति शालीकिश्चतुर्होतारमेवोपवसथे कुर्यादथेतरदिष्ट्यहनि कुर्यादित्यौपमन्यवः '' सर्वमेवैतदिष्ट्यहनि कुर्यादित्यौपमन्यवीपुत्रः ' ॥ १८ ॥ षष्ठः ॥

---

१ Emended, °चादित्यश्चरुस्त्वं परीयातामिति U (sec. m.), °चादित्यश्चरुस्तत्परिश्यादिति G (sec. m.); °चादित्यश्चतुरत्वं परीयादिति Bu; °चादित्यश्च (or श्र) त्वं (or च) परीयातामिति (or परिश्यादिति) the other MSS

69.1. अथातः पुनराधेयं[1] व्याख्यास्यामः ॥

69.16. सर्पराज्ञीष्विति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनः सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधातीति तं ह्यग्निराधाय सप्तम्योपतिष्ठेतेति ॥

70.1. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

70.3. तन्त्रकरण इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायन उभयानि तन्त्राणि कारयेत्पौनराधेयिकानि चाग्न्याधेयिकानि चाग्नेयमष्टाकपालं निर्वपेत्तस्यासमुदिते ऽग्न्याधेयदक्षिणा[2] दद्यादथाग्नेयं पञ्चकपालं तस्यासमुदिते पुनराधेयदक्षिणा[3] दद्यादथैन्द्राग्नं चादित्यं[4] च[4] चरुमथाग्निवारुणं पारे[5] द्वादशाहस्य तन्त्र[6] इति[6] ॥

0.17 विमुक्तीनां धान इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनः सर्वांस्सर्वान्त्समुह्य[7] यजेतेत्याग्नेयीर्ह्यपरा[8] विमुक्तीर्दध्यादित्यौपमन्यवः ॥

१ पुनराधानं *Bu*

२ °क्षिणां Bu D C.

३ °क्षिणां *Bu* U *Ben* D C.

४ Emended; च is missing both times in B G (sec. m.), the *second* च *is missing in* Bo D C *Ben* H U G (*pr.* m.).

५ परे H Bu Ben D C U G (pr. m.); पारे Bo G (sec m ).

६ इति is missing in all the MSS , which read तन्त्रो ; the vivaraṇa runs: द्वादशाहे गते तन्तुवर्त्योऽग्निरिति ।

७ Thus Bu G (sec m ); सर्वांस्त्समु° *the other MSS.*

८ Thus Bo only, °ग्नेयीर्ह्यपर° the other MSS.

I. 70 12. पुरोडाशस्य परिहोम इति॥ दैवतं परिजुहुयादिति बौधायनः" अस्विष्टकृत्कमिति शालीकिः'॥

I. 70. 14 स्विष्टकृतो निर्वचन इति॥ स्वे स्थाने निर्ब्रूयादिति बौधायनः" स्वे स्थाने निरुप्य कामं तत ऊर्ध्वं निर्ब्रूयादिति शालीकिर्"चो ह स्माहौपमन्यवः पञ्चैतानि स्विष्टकृत्स्थानानि भवन्तीति[1]' तेषु[2] सर्वेषु निर्ब्रूयादिति'॥

I. 71. 17. अथापावृत्ताग्नेर्नष्टारणीकस्य चेति॥ सूचक् शालीकेर्"चो ह स्माह बौधायनः कामं नष्टेषु वापवृत्तेषु वाग्निषु नाद्रियेतान्याधेयमाधानप्रभृति यजमान एवाग्नयो भवन्ति' तस्य प्राणो गार्हपत्यो ऽपानो ऽन्वाहार्यपचनो व्यान आहवनीयः' काममुपावरोह्य जुहुयादिति'॥

I. 72. 3. अग्नीनां विहरण इति॥ सूत्रं बौधायनस्याधानप्रभृत्येवैते ऽजस्राः स्युरिति शालीकिः'॥

I. 72. 17. पात्राणाꣳ सादन इति॥ सूचक् शालीकेर्"चो ह स्माह बौधायनः कूर्चे वा तृणेषु वा पात्राणि सादयेदपसव्यं[3] दारुणा[3] दारु[3] संलोभमानं[3] भवतीति'॥

---

१ G. om इति।

२ स्नेहः (meaning?) ins Bu.

३ Uncertain reading. Bu reads as given in the text; ॰पर्श्व दारुणा दारु सम्नौघ॰ G (sec m.); ॰पर्श्व दारुणा दारु (sec. m. दारुणा) संधौघ॰ U; ॰सव्यां दारुणा दारुराधौघ॰ Ben H; ॰सव्या दारुणा दारुणा संधौघ॰ Be; ॰पस्था दारुणा दारुराधौघ॰ D C; ॰पसव्यां दारुणा दारु संधौघ॰ G (pr m.).

द्वयोर्देशम इति ॥ स ह स्माह बौधायनो यदि पूर्वा[1] भ्रेषं नीयादुत्तरया[2] प्रायश्चित्तं कुर्वीताथ यद्युत्तरा[3] भ्रेषं नीयादुभयं[4] भ्रेषकृतं[5] स्यादन्यथा प्रायश्चित्तं कुर्वीतेत्यथो ह स्माह शालीकिर्यतरा कतरा चिद् भ्रेषं नीयादुभयं[6] भ्रेषकृतं स्यादन्ययैव ततः प्रायश्चित्तं कुर्वीतेति' ॥ १९ ॥

10. अभिज्वलन इति ॥ सूत्रं बौधायनस्य" गार्हपत्यादङ्गारेणाभिज्वाल्य त्रिः पर्यग्नि कुर्यादिति शालीकिः' ॥

13. वर्त्म कुर्वन्नुदगुद्दामयतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्तत्रैव[7] त्रिः प्रतिष्ठापयन्नित्रोद्दामयेत्तथ इमे लोका' एष्वेव लोकेषु प्रतितिष्ठतीति[8]' ॥

18. उत्थयन इति ॥ पूर्णान्वानूचो वेति' पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः' ॥

---

१ पूर्वा G (sec m.), पूर्वौ Be, पर्वया H Ben U C D, पूर्वया Bu

२ Emended; नैयादु॰ H Ben U D C, न्येयादु॰ Be G (sec. m.)

३ ॰तरा Be G (sec. m.), ॰तरया H Ben U C D G (pr. m.); ॰तरस्या Bu.

४ नैयादु॰ H Ben Bu U C D G (pr m.), न्येयादु॰ Be G (sec. m.). — Thus G (sec. m.), ॰दुभयच Bu; ॰दुभयचै Be; ॰दुभये the other MSS.

५ घोर (धोरं, घेरि) कृतं Ben H U G (pr. m.) C D.

६ नैयादु॰ Bu U C D G (pr m.); नैयदु॰ Ben H; न्येयादु॰ G (sec. m.) Be. — ॰दुभय (instead of ॰दुभयं) H Ben U D C.

७ Thus Bu Be; तत्रत्येव Ben G U D C, तत्रत्र H.

८ Thus (and cp. XX. 22) Bu G and U (sec. m.); ॰ष्ठामोति H Ben C Be, G and U (pr. m.), ॰ष्ठामीति D.

I. 73. 20. संमर्श[1] इति ॥ स ह स्माह बौधायन उभयं संमृशेच्च व्याख्याय सुगतं चेति ॥ सुगतमेवेति शालीकिः । ॥

I. 74. 4. अथ जघनेन गार्हपत्यमुपसादयतीति ॥ सूत्रं बौधायनस्रौवेणातिहारयेति[2] शालीकिः । ॥

I. 74. 20. हवन इति ॥ स्वयं व्यवेत्य जुहुयादिति बौधायनो । यद्यस्य पुत्रो वान्तेवासी वालंकर्मीणः[3] स्यात्स दक्षिणत आसीनो जुहुयादिति शालीकिः । ॥

ib. आहुत्योर्होम इति ॥ पूर्वापरे जुहुयादिति बौधायनः ॥ प्रष्टौ[4] इति शालीकिः । ॥

I. 75. 8. द्विरुपमृज्य द्विर्निमृजेदिति बौधायनः ॥ सकृदुपमृज्य द्विर्निमृजेदिति शालीकिः । ॥

I. 76. 2. द्विरङ्गुल्या प्राश्योदङ् पर्यावृत्य प्राचीनदण्डया स्रुचा भक्षयतीति ॥ सूत्रं बौधायनस्योदीचीनदण्डया भक्षयेदिति शालीकिः । ॥

---

१ Thus Bu Be and the vivarana; संमर्शन H Ben G U D C.

२ Thus (and cp XX 8. 21, 4) Bu G and U (sec m.) ०तिह्रयेति Be, ०भिहार्येति Ben G (pr. m ); ०भिहार्येति H U (pr m D C corrupt

३ Thus G U (sec m.); वालंकर्मीनः Ben; वालंकर्मिणः H, वालंकर्मणः Bu, वालंधर्माण Be; cp XX. 2: 6, 12.

४ Thus G ( sec m ) and the vivarana; प्राष्टौ H Ben Be U D C; प्राचीष्टौ Bu; cp. XX. 13· 29. 11.

9-13. निर्णिज्य स्रुचं निष्प्याद्भिः पूरयित्वोदशुद्दिशतीति[१] जघनेन गार्हपत्यमपो निनयतीदमहमग्नौ वैश्वानरे ऽमृतं जुहोमि स्वाहेत्यचित्यामचिताहुतिमिति वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

5. 18. आग्निपावमानीभिरुपस्थान इति ॥ स ह स्माह बौधायनः संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्यृचो ह स्माह शालीकिर्यत्प्राक् चोर्ध्वं चाग्निपावमानीभ्यस्तेन संवत्सरं यथोपस्थितमाहवनीयमुपस्थाय तत आग्निपावमानीभिर्गार्हपत्यमुपतिष्ठेताथ गायत्रीभिरथ द्विपदाभिरथ श्वो भूते यथायथमित्येवमौपमन्यवो[२] न चास्यात ऊर्ध्वमाग्निपावमान्य आहवनीयमागच्छेयुर्न गार्हपत्यꣳ स्वाध्यायार्था एवास्यात ऊर्ध्वꣳ स्युरिति[३] व्याहृतीभिरुपस्थाय मह्युं वः[४] प्रकेपꣳ श्रद्धा मे मा विगादित्येव ब्रूयादित्याश्मीगविः ॥

10. 4. आग्निःस्थिति[५] ॥ स ह स्माह बौधायन आत्मने प्रथम-

---

१ उदसुदिशतीति found only in Bu and G (sec m) Be and U (sec m.) have instead वदिर्. About the constitution of the text of this dvaidham and its meaning I am uncertain.

२ All the MSS exc. G (sec. m.) om. एवम् ।

३ All the MSS. ins. शालीकिर्, which in G is effaced.

४ Effaced in G.

५ आग्नीध्रिति MSS.

मागामीताथ जातेभ्यो ऽथ तन्तव इत्यौचो ह स्माह शालीकिर्जातेभ्यः प्रथममागामीताथात्मने ऽथ तन्तव इत्यौचो ह स्माहौपमन्यवो ऽजातेभ्येवात्मने[1] च तन्तवे चेति ॥ काममपि सायंप्रातरागामीतेत्यौपमन्यवीपुत्रः । ॥ २० ॥

I 79. 10. पिण्डपितृयज्ञस्य करण इति ॥ स ह स्माह बौधायन आदित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादाहुतीनाꣳ होमादाहुतीर्होष्यन्यज्ञोपवीतं कुर्वीत । स यज्ञोपवीत्येव स्यादा सकृदाच्छिन्नस्य स्तरणात्सकृदाच्छिन्नꣳ स्तरिष्यन्प्राचीनावीतं[2] कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चा गार्हपत्यमुपतिष्ठेतेत्यौचो ह स्माह शालीकिरादित एव प्राचीनावीतं कुर्वीत । स प्राचीनावीत्येव स्यादा प्राजापत्यायै । यज्ञोपवीत्येव प्राजापत्ययर्चोदद्रवेयादिति[3] । ॥

तूष्णीꣳ[4] सकृदुत्पूय सकृत्प्रोक्ष्य सकृद्विस्फूर्ज्य कुर्यादिति बौधायनः ॥ सकृदेवैनान्सुफलीकृतान्कृत्वा पवित्रवत्याꣳ स्थाल्यामोप्य स्थालीपाकꣳ श्रपयित्वाभिघार्योदञ्चमुद्वासयेदिति शालीकिः । ।

---

१ The avagraha given only by G (sec m ); to the reading ऽजातेभ्ये the vivarana also seems to point.

२ स्तरीष्य॰ H Be

३ Thus G (sec m.); ॰र्चोदियादिति Ben H C D G and U (sec. m.); र्चोदद्रवेयादिति Bu; ॰चादद्येयादिति Be U (pr. m.).

४ Effaced in G.

5. आहुतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य ॥ नात्र मध्यमामाहुतिं जुहुयान्मेक्षणेनैव तृतीयꣳ स्यादिति शालीकिः । ॥

.9. मक्षदाच्छिन्नस्य स्तरण इति ॥ उपनिष्क्रम्यान्यगाराद्दक्षिणे पूर्वे ऽवान्तरदेशे मक्षदाच्छिन्नꣳ स्तृणीयाद्दक्षिणतश्चोल्मुकमुपनिदध्यादिति बौधायनो ॥ ऽन्तरेवैतां दिशमिति शालीकिर्न चात्रोल्मुकमुपनिदध्यादिति । ॥

11. पिण्डानां दान इति ॥ सूत्रꣳ शालीकेर्॥ चो ह स्माह बौधायनः परस्तादेवामुतो ऽर्वाचो ऽपसलैः पिण्डान्दद्यादिति[१] । ॥

20. आञ्जनाभ्यञ्जने मनसो निह्नव[२] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥[३]

.18 पिण्डानामनुप्रहरण इति ॥ सूत्रꣳ शालीकेर्॥ चो ह स्माह बौधायनो ऽत्रैवैते पिण्डाः परिश्रयीरनुच्छिष्टा ह्येते भवन्ति पितृभिर्भक्षिता इति[४] । ॥

अतिशिष्टस्य प्राशन इति ॥ स्वयं यजमानः प्राश्नीयादिति बौधायनः ॥ पुत्राय वान्तेवासिने वा दद्यादिति

---

१ पिंडंदद्या॰ MSS. exc. G (sec. m.).

२ निह्नवन G.

३ No vikalpa is found in the text proper of Baudh.

४ Thus H Ben C D G (pr. m.); भक्षिता इति Be, भक्षितेति G (sec. m.), भक्षितमेति Bu.

शालीकिः " पत्नीं प्राशयेत्प्रजास्येषा[1] भवतीत्यौपमन्यवो " ऽङ्गुल्या यावन्मात्रमवघ्रायाथेतरदग्नावनुप्रहरेदित्यौपमन्यवीपुत्रो " भस्मोत्कर उद्वास्य संप्रच्छादयेदित्याश्नौगविर"पो[2] ऽभ्यवहरेदिति मौद्गल्यः ' ॥ २१ ॥

I. 82 4. आग्रयणस्य तन्त्रसमास इति ॥ नास्ति तन्त्रसमास[3] आचार्ययोर"त्रो ह स्माहौपमन्यवः सौम्यं[4] निरुप्याथेतराणि हवीꣳषि निर्वपेदेवमस्य चरुमुखानि[5] हवीꣳषि भवन्तीत्य"त्रो ह स्माहौपमन्यवीपुत्रो ऽतिपातादावापिक एव सौम्यः स्यादन्तरेण वैश्वदेवं चैककपालं च निर्वपेदित्य"त्रो[6] ह स्माहाश्नौगविस्तौख्येतानि[7] हवीꣳषि भवन्ति ' त्रय इमे लोका ' एष्वेव लोकेषु प्रतितिष्ठति ' श्यामाकेनैवास्य प्रस्तरेणैतदाप्तं भवतीति ' ॥

I. 82 6. आज्यानीनाꣳ होम इति ॥ सूत्रं बौधायनस्य " पुरस्तात्स्विष्टकृतो ऽज्यानीरुपजुहुयादिति शालीकिः ' ॥

ib. आग्रयणहविषाꣳ श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः ' ॥

---

१ Thus Ben Be G U D C, प्राजास्येषा Bu; प्रजास्येष H

२ सं (before प्रच्छाद॰) om. H Ben D C U G (pr. m)

३ इति ins. G and U (sec. m), but cp. XX. 18 · 40. 4.

४ सर्वं ins. H Ben U C D G (pr. m).

५ ॰मुख्यानि Bu D G (sec. m.)

६ Thus (निर्वपेद्) Ben H Be U D C, वापयेद् Bu; effaced in G.

७ Thus without एव, U C D Ben D G (pr. m.) and Keś.; ख्येवैतानि Be Bu G (sec. m.).

आग्रयण एककपालस्य[1] करण[1] इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः ॥

तन्त्रकरण इति ॥ स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्वर्वाचित्रावाज्यभागावुच्चैर्देवताः कुर्याद्यजमानमित्यूचो[2] ह स्माह शालीकिः सप्तदशसामिधेनीकाः स्वृर्धन्वन्तावाज्यभागावुपांशुदेवताः कुर्याद्यजमानमिति[2] ॥ २२ ॥ सप्तमः ॥

20. विपरिधान[3] इति ॥ स ह स्माह बौधायन आहवनीयेनैकेन विपरिधाय[3] प्रव्रजेत्प्रोष्य पुनरागम्य[4] सर्वैर्मन्त्रैराहवनीयं प्रत्युपतिष्ठेतेत्यूचो ह स्माह शालीकिर्यथोपपन्नमेवाग्निभिर्विपरिधाय[3] प्रव्रजेत्प्रोष्य पुनरागम्य[5] सर्वैर्मन्त्रैरेकैकं प्रत्युपतिष्ठेतेति ॥

अनुपस्थाय प्रव्रजितस्येति ॥ यत्र स्मरेत्परोचं तत एनं नित्येनोपतिष्ठेतेति बौधायनो ॥ न[6] चेत्समरेत्प्रोष्य[6] पुनरागम्य[7] नित्येनैवेति शालीकिः ॥

१ कपालकरण H Ben U D C G (pr. m.).

२ Thus U Be G (sec. m.), the other MSS. या (or य)जमान इति।

३ ॰परिदान and ॰परिदाय D C

४ ॰गत्य Bu Ben H U G D C; ॰यम्य Be.

५ ॰मम्य Bu and the vivarana; ॰यम्य Be; ॰गत्य Ben H G U C; D defective.

६ न चेत्सम॰ Be Bu G and U (sec. m.), न चैत्स॰ D C.

७ ॰गत्य U H Ben G D C.

84, 9. प्रवसथाहुताविति[1] ॥ स ह स्माह बौधायनो यदि कृतं प्रायश्चित्तं स्यान्नाद्रियेत तत्र होतुमेव यद्यकृतं स्यात्तदेनां[2] जुहुयादित्यथो ह स्माह शालीकिर्ये प्रत्याम्नातप्रायश्चित्ता होमाः[3] स्युस्तान्येव तत्र प्रायश्चित्तानि स्युर्य ये ऽप्रत्याम्नातप्रायश्चित्ता होमाः[3] स्युर्नैवैनानाद्रियेतेत्यथो[4] ह स्माहौपमन्यवो यदि चैव कृतं प्रायश्चित्तं स्याद्यदि चाकृतं जुहुयादेव तत्र प्रवसथाहुतिमिति ॥

84 15. विराजक्रमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 85, 6 अपामाचमन इति ॥ द्विर्मन्त्रेणाप आचामेत्सकृत्तूष्णीमिति बौधायनः सकृन्मन्त्रेणाप आचामेद्द्विस्तूष्णीमिति शालीकिः ॥

I. 85, 8. प्राचीकरण इति[5] ॥ स ह स्माह बौधायनः सर्वा एवैता देवताः प्राचिणीः कुर्वीताग्ने व्रतपते व्रतं चरिष्यामीत्यग्निर्वै देवानां व्रतपतिरित्येतदेव[6] नातिमन्येतेति[6] शालीकिः ॥

---

१ Thus emended; प्रवसथाहुति(तौ)मिति D C Ben H U (pr. m.); प्रवासादाहुताविति U (sec. m.); प्रवसदाहुताविति G (sec. m.); प्रवसतोहुताविति Bu

२ ०चैता MSS.

३ हेमा MSS.

४ Thus C H Ben G U (pr. m.) D (sec. m.), नैवैनाना० Be; नैनेनाना Bu D (pr. m.); नैवैनानामा० U (sec. m.).

५ प्राची० Bu H and the vivarana (one copy); प्राचि० Ben Be C D G U and the vivarana (another copy).

६ Thus Bu Ben U G D C; ०देवानामतिमन्येतेति H; ०देवानाभि० Be.

. 17; 36. 5. कपाले नष्टे भिन्ने चेति ॥ सूत्रमाचार्ययोर्‌॥ चो ह स्माहौपमन्यवो मनो ज्योतिर्जुषतां त्रयस्त्रिꣳशत्तन्तव इत्येते स्रुवाहुती हुत्वाथान्यदपिसृजेद्दर्मा देवाꣳ अप्येत्विति । स एष मन्त्रो भवति सं त्वा सिञ्चामि यजुषेति । पयो वाज्यं वाभिक्रमेतेनैव मन्त्रेण सꣳसिञ्चेदिति । ॥

7. 3. आज्यग्रहाणां ग्रहण इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥ चो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैर्गृह्णीयात्पौरोडाशिकैश्च याजमानैश्च । न याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥ चो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त[1] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[1] । ॥

. 14. परिधीनां परिधान इति ॥ स ह स्माह बौधायनो ऽध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च । याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥ चो ह स्माह शालीकिरध्वर्युरेवोभयैर्मन्त्रैः परिदध्यात्पौरोडाशिकैश्च याजमानैश्च न याजमानैर्यजमानो ऽनुमन्त्रयेतेत्य॥ चो ह स्माहौपमन्यवो यथापि पौरोडाशिका मन्त्रा नाभिवर्तन्त[1] एवमेवापि याजमाना मन्त्रा नाभिवर्तेरन्निति[1] । ॥

3. 2. समिधोरभ्याधीयमानयोर्जपतीति ॥ सूत्रं बौधायनस्य ॥ सर्व एवैषो ऽग्नियोजनो मन्त्रः स्यादिति शालीकिः । ॥ २३ ॥

---

१ G and U (sec. m ) each time नाभिनिव॰, Bu the second time.

I. 88. 8. अथ भूर्भुवः सुवरित्यग्निहोत्रमेताभिर्व्याहृतीभिरुपसादयेदिति॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेर्चो ह स्माह बौधायनो यस्याꣳ रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेत्यर्चो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[1] संवत्सरो भवति। यस्याꣳ रात्र्यामादित उपसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा रात्रिः स्यात्तस्यामुपसाद्य न तत ऊर्ध्वमाद्रियेतेति॥

I. 88. 11. दर्शपूर्णमासावालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यामादयेदिति॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेर्चो ह स्माह बौधायनो यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेत्यर्चो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति। यस्यां पौर्णमास्यामादित आसादयेत्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्यामासाद्य न तत ऊर्ध्वमाद्रियेतेति॥

I. 88. 15. चातुर्मास्यान्यालभमान एताभिर्व्याहृतीभिर्हवीꣳष्यामादयेदिति॥ स एवमेव संवत्सरेसंवत्सर इति सूत्रꣳ शालीकेर्चो ह स्माह बौधायनो यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यामादये-

---

१ एवं (एवꣳ) instead of एव Bo G U C D Bu; the passage is missing in H Ben.

२ एव Bo H Ben U; एवं Bu D G C.

त्संवत्सरे[1] पर्यवेते तस्यां[1] वैश्वदेवहवीꣳष्यासाद्य[1] न तत ऊर्ध्वमाद्रियेतेत्यचो ह स्माहौपमन्यवो ऽभ्यारूढः खल्वस्यैव[2] संवत्सरो भवति ' यस्यां पौर्णमास्यां वैश्वदेवहवीꣳष्यासादये- त्संवत्सरे पर्यवेते या ततः पूर्वा पौर्णमासी स्यात्तस्याꣳ शुना- सीरीयहवीꣳष्यासाद्य न तत ऊर्ध्वमाद्रियेतेति '।

21\. व्याहृतीनां धान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

15\. प्राशित्रे ऽवदीयमाने जपतीति ॥ सूत्रं[2] मैत्रेयस्यौपा- यनयोः[2] प्राशित्रे ऽवदीयमाने जपत्यग्निर्मा दुरिष्टात्पातु सविताघशꣳसादिति ' ॥

17\. यजमानभागे यो मे ऽन्ति दूरे ऽरातीयति तमेतेन जेषमिति ॥ सर्व एवैष स्विष्टकृदनुमन्त्रणो मन्त्रः स्यादि- त्यौपमन्यवः ' ॥

12\. 6. वेदे यजमानं वाचयतीति ॥ सूत्रꣳ शालीकेर्चो ह स्माह. बौधायनो वेदे यजमानं वाचयति वेदो ऽसि वित्ति-

---

१ In G this passage has been changed in the following way. °सादयेदिति स संवत्सरे पर्यवेते तस्यां शुनासीरीयहवीꣳष्यासाद्य, in U it runs. °सादयेत्संवत्सरे पर्यवेते तस्यां पौर्णमास्यां शुनासीरीयहवीꣳष्यासाद्य; possibly G and U are right in reading (l. 1) शुनासीरीय° instead of वैश्वदेव°।

२ सर्वं Bau G.

३ Thus Bu G (sec. m.); सूत्रमात्रेयस्याय° the other MSS.

रमि विद्येति । यद्यङ्गाद्यस्याभिध्यायेत्तस्य[1] नाम गृह्णीया-त्तदेवास्य सर्वं वृङ्क्त इति । ॥

अथ यदि यजमानः सुरापो वा भवति प्रवसति वेति ॥ स ह स्माह बौधायनः प्रवसतः प्रस्तरेणैवास्य सह यजमान-भागमनुप्रहरेद्ध्रुवायै वाज्येन पर्युपस्तीर्य जुह्वामवधाय जुहु-यात्प्रस्तरस्थयं[2] यजमानभागो गच्छतीत्य॥थो[3] ह स्माह शालीकिरादित एव न सुरापेण संसृज्येताथ चेत्संसृज्येत मन्त्रान्तु हैनं वाचयेत्किमु भवान्[4] भक्षयेदिति[5] ॥ भक्षयेच्चैव भवानित्यौपमन्यवः । ॥

I, 93. 7. आदित्यस्योपस्थान इति ॥ उपनिष्क्रम्याग्न्यगारादादित्य-मुपतिष्ठेतेति बौधायनो ॥ ऽत्रैव तिष्ठन्निति शालीकिः । ॥

पौर्णमास्यामुपवेषस्य करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिः । ॥

L 94. 9. व्रतविसर्ग इति ॥ मन्त्रेणाप आचम्य मन्त्रेण व्रतं विसृजे-तेति[5] बौधायनस्तूष्णीमप आचम्य मन्त्रेण व्रतं विसृजेतेति शालीकिरुपवेषेण चरित्वा व्रतं विसृजेतेत्यौपमन्यवः । ॥

---

१ यद्द twice in Bu G (sec. m.), once in the other MSS.

२ °स्थयं U Bu G (sec m.); भागं Ben H C D G (pr. m.); Be uncertain.

३ गच्छती G (sec m.).

४ भवानभक्ष° Bu, भवान्भक्ष° Be

५ Here and *infra* only Be has the medium, the other MSS. have the active.

2. यज्ञस्य पुनरालम्भं जपतीति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः[१] ॥ २४ ॥ अष्टमः ॥

1. अथातः पशुबन्धं व्याख्यास्यामः ॥

स ह स्माह बौधायनः सोपवसथा इष्टिपशुबन्धा इति ॥ सोपवसथा[१] वा[१] सद्योयज्ञा[१] वेति[१] शालीकिः[१] ॥

इष्टिकरण इति ॥ पशौ पशावेवाग्नेयेनाष्टाकपालेन यजेतेति बौधायनो ॥ बभ्रुकर्णो चैवैतद्जवशायां[२] च दृष्टं भवतीति शालीकिः[१] ॥

स्फ्यो यूपो भवतीति ॥ स्फ्यप्रकार[३] एवायं यथावान्यूपो भवतीति बौधायनो[४] ॥ ऽस्फ्य[४] एवायमन्यगारिको ऽचषालो यूपः स्यादिति शालीकिः[१] ॥

विशाखो यूपो भवतीति ॥ ऊर्ध्वं रशनाकाशाद्[५] शाखे चतुरश्रे चतुरश्रचषाले[६] स्यातामथेतरो ऽष्टाश्रिर्यूपः स्यादिति

---

१ Thus G (sec. m.) and Bu (the last MS. reading, however, ०यज्ञो); सोपवसथासद्योज्ञावेति Ben U D C, सोपवसथावोवासद्योयज्ञावेति H; सोपवसथो सद्योयज्ञावेति Be, cp. Rudradatta on Āp. VII. 6. 3.

२ ०द्जवशा० Bu G (pr. m.), ०द्जावशा० Ben U C D G (sec. m.), ०द्यवशा० Be, ०द्वावशा० H.

३ स्फ्याकार G D, स्फ्यकार C.

४ Thus Be (without, however, the avagraha); ०यायन (or नः) स्फ्य the other MSS.

५ ०काशाद्व MSS.

६ Thus Be; चतुरश्रेरचषाले H; चतुरश्रे (वे)चषाले the other MSS.

बौधायनः" प्राखैवेयमचषाला स्यादथेतरो ऽग्राग्निर्यूपः स्यादिति शालीकिः' ॥

I. 107. 6. सक्तुकरण इति ॥ सूत्रं बौधायनस्य" ब्रीहीणामपि कुर्यादिति शालीकिः' ॥

I. 107. 8. षड्ढोतुर्होम इति ॥ सूत्रं बौधायनस्यौपवसथ एव षड्ढोतारं जुहुयादिति शालीकिः' ॥

I. 107 10. यूपाहुत्ये हवन इति ॥ सूत्रꣳ शालीकेर्"चो ह स्माह बौधायन स्राव्यं चारणी चादाय यूपस्यान्तिके ऽग्निं मथित्वा यूपाहुतिं जुहुयादिति' ॥

I. 108. 4. स्रमस्त्वनस्याभिहोम इति ॥ सूत्रꣳ शालीकेर्"चो ह स्माह बौधायन एवमेव शुक्लामन्तर्धाय हिरण्यमभिजुहुयाद्वनस्पते शतवल्शो विरोह स्वाहेति' सहस्रवल्शा वि वयꣳ रुहे-मेत्यात्मानं प्रत्यभिमृशीताथोदकꣳ[१] स्पृशेदिति' ॥

I. 108. 12. यूपस्यावाहन इति ॥ यः प्राङ् वोदङ् वा पतेत तमावाहयेदिति बौधायनो" यां[२] कां[२] चिद्दिशमभि पतेतास्यापन्न-स्थेस्यादावाहयेदेवेति शालीकिः' ॥

I. 108 13. वेधै करण इति । सूत्रमौपमन्यवीपुत्रस्याचो ह स्माह बौधायनो रथसंमिता स्याद्रथाह्वेण पश्चात्तिरश्ची रथेपया

[१] Thus (and cp Vol. I, p. 108, 7, medium') Bu G (sec. m); •कमसौ• Be; •स्पृशेदि• the other MSS

[२] यांकांचिद्दिश• G (sec m).

प्राची रथयुगेन[१] पुरस्तात्तिरश्युत्तरयुगेनोत्तरनाभिरिति[२] ॥ चतुर्निमिता वा स्यात्षड्डतो वा दशपदा विराट्संपन्नेति[३] शालीकिः ॥ २५ ॥

10. 3; चात्वालस्य परिलेखन इति ॥ सूचत् शालीकेर्चो ह स्माह बौधायन एवमेव परिलिखन्वाह्वन:[४] पुरस्ताच्चोत्तरतश्चालिखेदिति । ॥

लोकाग्नीनाम् हरण इति ॥ सूचत् शालीकेर्चो ह स्माह बौधायन उत्तरवेद्यामाग्नीध्रमुपवेश्य[५] ततो लोकाग्नीन्हरेदित्युद्देशादेव लोकाग्नीन्हरेदित्यौपमन्यवः ॥

0 1. उत्तरवेद्यै परिमाण इति ॥ सूचत् शालीकेर्चो ह स्माह बौधायनो रथसंमितायामेव धौरेयशम्यया परिमिमीत[६] मात्र मध्यमा वेदिर्भवतीति ॥

1. 4; 13. आख्यातं यूपावटस्य परिलेखनम् ॥

---

१ •युगेण Bu.

२ उत्तरयुगेण all the MSS. (exc. U sec. m.) and the vivarana.

३ Thus G; विराट्संमितेति U (sec. m.); विराट्संपन्नेति H Ben D Bo CU (pr. m.); विराट्समेति Bu.

४ Thus Be DC; •लिखचाह्वन: H; •लिखवाह्वन: Ben; •लिखेवाचाह्वन: Bu; •लिखेत्वाह्वन: G (sec. m.) U.

५ Thus Bu and a bhāṣya in the Bombay MS. class I B 5; •मनुपविश्य Be; •म उपविश्य Ben HUDC, •मं उपविश्य G.

६ Thus Bu G (pr. m.); •मिमीते the other MSS.

I. 110. 1. उत्तरवेद्या अलंकरण[1] इति ॥ सूत्रं बौधायनस्य " पूर्वेधुरेवोत्तरनाभिं परिनिस्तिष्ठेदिति शालीकिः ' ॥

I. 110. 13 स्फ्येनाग्नीध्रो निघ्नन्त्विति होतुः पदानीति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायनः पदात्पदं पाꣳसूनुपसꣳहृत्य[2] तानुत्तरेणोत्तरनाभिमतिकिरेदिति ' ॥

I. 110 16 उत्तरवेद्यै प्रोक्षण इति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायनो मन्त्रानुदिशं चैनां प्रोक्षेन्मन्त्रानुलोकं चेति । ॥

I. 110. 20. अतिशिष्टानां निनयन इति ॥ वेद्यै दक्षिणेऽꣳसे निनयेदिति बौधायन " उत्तरवेद्या इति शालीकी " स्यवंमितायामेव दक्षिणमꣳसमुपनिनयेदित्यौपमन्यवः ' ॥

I 111. 1. उत्तरवेद्यै व्याघारण इति ॥ सूत्रं बौधायनस्य " प्रत्यनीकेष्वेनां[3] व्याघारयेदिति शालीकिर्"स्तथैव व्याघारयन्मध्ये कृत्वोत्तरमꣳसमभिजुहुयादित्यौपमन्यवः ' ॥

I. 111. 11. इध्मस्य निधान इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेवेध्मं निदध्यादिति शालीकिः ' ॥

I. 111. 14. अध्वराकृतीनाꣳ होम इति ॥ सूत्रं बौधायनस्य " चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः ' ॥

I. 112. 11. पृषदाज्यग्रहणे संमार्जनसादन इति ॥ सूत्रं बौधायनस्य "

---

१ °कार Bu Be

२ °समुपसंहृत्य Be; °मुपहृत्य GU (sec. m.); °कुपसंहृत्य Bu H Ben U (pr. m.) DC.

३ प्रत्यनीके° Bu Ben HC; प्रत्यनीके° Be; पत्यनीके° D; प्रत्यनीके° GU, the vivaraṇa and the bhāṣya.

लभेतौपस्तृते[१] संमार्जनसादने इति शालीकिर्नं संसृजेदित्यौपमन्यवः ॥

13. पृषदाज्यस्य ग्रहण इति ॥ सूत्रं बौधायनस्य ॥ हृदयान्तेन गृह्णीयादिति शालीकिः ॥ संसृज्याज्यं च दधि चैतैः पञ्चभिर्गृह्णीयादित्यौपमन्यवो ॥ ऽथो ह स्माहौपमन्यवीपुत्रस्तूष्णीं द्विरुपस्तीर्य सर्वैर्मन्त्रैर्दध्यानीय तूष्णीं द्विरभिघारयेदिति ॥

पृषदाज्यस्य प्रायश्चित्तकरण इति ॥ ग्रहणादग्रा[२]चरणादेवैवास्य[३] प्रायश्चित्तं कुर्वीतेति बौधायनः ॥ सादनादग्रा[२]चरणादनैवेति[३] शालीकिर्न तु इषितमात्र[४] इत्यौपमन्यवः ॥

13 7 यूपस्य प्रक्षालन इति ॥ सूत्रं बौधायनस्य ॥ तूष्णीमेव यूपं प्रक्षालयेदिति शालीकिः ॥

3. 10. यूपस्य प्रोक्षण इति ॥ स ह स्माह बौधायनः स्वरुगनं कैवात्स्णदण्डं यूपशकलं हिरण्यमुदपात्रमित्येतत्संनिधाय यूपं प्रोक्षेदित्येवं यूपेन यूपसंयोजनानि प्रोक्षेत्पशुना पशुसंयोजनानीति शालीकिः ॥

---

१ Thus the vivaraṇa; ॰तोपस्तृते Bu; तोपस्तृतः the other MSS.; cp. Kāty. V. 4 28.

२ Or are we to write ॰दग्राचरणा॰? The meaning of this passage is not clear to me.

३ चव effaced in G.

४ Meaning and reading uncertain; इषितमात्र इ॰ G (sec m.) and the bhāṣya; इषितमात्रे the vivaraṇa; इषमपात्र इ॰ Bu; इषितमात्र इ॰ Bo; पषितमात्रमि॰ Beu HODG (pr. m.); पषितमात्र॰ U.

113. 18. यूपस्य परिक्रमण[१] इति ॥ दक्षिणेनेति बौधायन[11] उत्तरेणेति शालीकिः[1] ॥

I 114. 2. यूपस्याञ्जन इति ॥ सूत्रं बौधायनस्याग्निष्ठामेवेति शालीकिः[1] ॥

उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो[11] यथोपपादमिति शालीकिः[1] ॥

I 114. 16. यूपस्य परिव्ययण इति ॥ त्रिरेव मन्त्रं ब्रूयात्त्रिः कर्मावर्तयेदिति बौधायनः[11] सकृदेव मन्त्रं ब्रूयात्सकृत्कर्मेति[२] शालीकिः[1] ॥

ib. नाभिदघ्ने परिव्ययतीति ॥ सूत्रं बौधायनस्य[11] मध्यदेश इति शालीकिः[1] ॥ २६ ॥

I. 114 21. स्वरोरवगूहन इति ॥ सूत्रं बौधायनस्याग्निष्ठां प्रतीति शालीकिः[1] ॥

I. 115. 2. पशोरुपाकरण इति ॥ सूत्रमौपमन्यवीपुत्रस्यांचो ह स्माह बौधायन एवमेवोपाकुर्यान्न तु जोषयेदिति[11] जोषयेच्चैव जुह्वाश्चोपाकरणायेति शालीकिर्[11]चो ह स्माहौपमन्यव एवमेवैनं पुरस्तात्प्रत्यगात्तत्त्वं[३] बर्हिर्भ्यां च प्लक्षशाखया चाभिषेधेदेतस्यां[४] च प्लक्षशाखायाꣳ हृदयं निधायावद्येदिति[1] ॥

---

१ Thus Ben HDCUG (pr m.) and the vivaraṇa; °क्राम G (sec m), °क्रम Bu Be

२ ब्रूयात्सि कर्मेति G (sec. m.)

३ Thus DGU; °त्तं Bu; °त्तं the other MSS.

४ Thus H Ben DCBe G (pr m.) and the vivaraṇa; °भिषेधे° G (sec. m.); °भिषेधे° U; B has a lacuna.

5. 9. अरण्योः समञ्जन इति ॥ सूत्रऽ शालीकेर्"चो ह स्माह बौधायनो ऽग्नेर्जनित्रमसीति शकलमाददीत ' वृषणौ स्थ इति दूर्वे[1] वा शकले वा [2]निदध्यादुर्वश्यसीत्यधरारणिमाददीत ' पुरूरवा इत्युत्तरारणिमथैने आज्यस्थाल्याऽ समज्य[3] घृतेनाक्ते वृषणं दधाथामिति समवदध्यादिति ' ॥

15. पशुरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ' ॥

16. पशोरभिधान इति ॥ सूत्रं बौधायनस्य " ग्रीवायामेवाभिदध्यादिति[4] शालीकिः ' ॥

5. 19. पशोर्नियोजन इति ॥ सूत्रं बौधायनस्य " यूप एव पशुं नियुञ्ज्यादिति शालीकिः ' ॥

ib. पशोः प्रोक्षण इति ॥ तूष्णीऽ संस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः " कमण्डलुभिरिति[5] शालीकिः ' ॥

16. 7. पशोः समञ्जन इति ॥ सूत्रऽ शालीकेर्"चो ह स्माह बौधायनो ललाटे स्रुचं प्रतिष्ठाप्यानुच्छिन्दन्कपर्दा दक्षिणायै श्रोणेरिति ' ॥

---

१ पूर्वं Be Ben U (pr. m.).

२ धानुनिदध्या॰ Be U (sec. m.).

३ Thus HD; समंज्य U Ben; सम्यज्य C; समंज्याद Be; समभक्ति Bu G (sec. m.).

४ Thus G and U (sec m.) and the vivaraṇa; ग्रीवायामेनमभि॰ the other MSS.

५ Thus D Bu; कमंडलुभि॰ GUC (sec. m.); कामंडलुभि॰ the other MSS.

स्वरुशकलस्योत्पादन इति ॥ यूपः स्वरुशकलमुत्पादयेदिति बौधायनः " पशुरिति शालीकिस्तन्त्रमित्यौपमन्यवो " देवतेत्यौपमन्यवीपुत्रः ॥ २७ ॥ नवमः ॥

I. 116. 13. अत्याश्रावण इति ॥ सूत्रं बौधायनस्य " सोम एवात्याश्रावयेदिति शालीकिः ' ॥

I. 117. 2. पशोः समञ्जन इति ॥ स ह स्माह बौधायनो यथा[1] समञ्ज्यात्[2] तथा[1] विशस्यात्[3] नेतथा[1] शृतस्थावयेदिति " यथोपपादमिति शालीकिः ' ॥

I. 117. 4. पशोः पर्यग्निकरण इति ॥ सहशामित्रं पर्यग्नि कुर्यादिति बौधायनो " यदन्यच्छामित्रादिति शालीकिः " पशुं चाज्यानि चेति राथीतरः " पशुमेवेत्यौपमन्यवः ' ॥

I. 117. 6. अपाव्यानाहोम इति ॥ स ह स्माह बौधायन एकं प्रथमे पर्याये जुहुयाद्द्वे मध्यमे द्वे उत्तम इति " यथोपपादमिति शालीकिः ' ॥

I. 117. 12. उपप्रैषाश्रावण इति ॥ सूत्रं बौधायनस्य " नाश्रावयेदिति शालीकिः ' ॥

I. 117. 17. पशोर्निहनन इति ॥ प्रतीचीनशिरसमुदीचीनपादमिति

---

१ यथा and तथा (instead of यथा and तथा) some of the MSS.

२ समंज्यात्तथा Bu.

३ विशंस्या॰ all; विशसनं न कुर्यात् the vivaraṇa; cp. Āp. VII. 14. 13 and Bhāradvāja VI. 11: या यथा धारा तथा पशुं समनक्ति तथैव हविः शृतस्थावयन्नेतया विशस्ति यथाकामी विशसन इत्यपरम् ।

बौधायन " उदीचीनशिरसं प्रतीचीनपादमिति शालीकिः " प्राचीनशिरसमुदीचीनपादमित्यौपमन्यवः ' ॥

18. 5. पशुरशनाया उद्‌सन इति ॥ चात्वाले रशनामुदस्येदिति बौधायनो " ऽद्भिरभ्युक्ष्यासंचरे[1] इति शालीकिः ' ॥

18. 9. ५ पत्न्या उदानयन इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो ऽनर्वां प्रेहीत्येनां प्रणयेदथैनामादित्यमुदीच्यानर्वां प्रेहीत्येव प्रणयेदिति ' ॥

18. 10. अपामवेक्षण इति ॥ उपरिष्टाच्चात्वालस्यावेक्षयेदिति बौधायनः ' पार्श्वतः पशोरिति शालीकिः ' ॥

19. 6 १० बर्हिषः समञ्जन इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनस्तथाक्रमेवेतरस्मादितरत एवैनदक्त्वा निरस्येद्दक्षिणा भागो ऽसीत्यथोदकं स्पृशेदिति ' ॥ २८ ॥

वपायाः प्रदान इति ॥ आज्यस्रुवा वा स्रुग्घिरण्यं वा[2] द्वितीये चतुर्थे चेति " पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

21. 4. १५ पशुपुरोडाशस्य निर्वपण इति ॥ सूत्रं बौधायनस्य " पशुमालभ्य पुरोडाशं निर्वपेदिति शालीकिः ' ॥

21. 5. पशोः प्रच्यावन इति ॥ हृदयजिह्वे[3] प्रच्यावयेदिति बौधायनो " हृदयमेवेति शालीकिः ' ॥

---

१ ह्विरभ्युक्ष्य H Bcn DCG (pr. m.).

२ Found only in G and U (sec. m.) and the vivaraṇa; cp. also Rudradatta on Āp. VII. 20 9.

३ हृदयं जिह्वां Bu G and U (sec. m.) Keś.; हृदयं जिह्वे U (pr. m.); हृदयजिह्वा D.

. 121. 10. हृदयस्य श्रपण इति ॥ सूत्रं शालीकेर्" यो ह स्माह बौधायनः शूलपाकमेवैनच्छ्रपयेद्यद्येव हृदयशूलं परिनिस्तिष्ठेदुपरिष्टाच्च मन्त्रेणोपस्पृशेदिति[१] ' ॥

I. 121. 13. पशुपुरोडाशस्येडाया अवदान इति ॥ सूत्रं शालीकेर्" यो ह स्माह बौधायनो निरवदायैवास्य स्विष्टकृतमिडामवद्येदेवं सवनीयानामिति ' ॥

I. 122. 2 इडसूनस्य करण इति ॥ सूत्रं बौधायनस्य " बर्हिष्येव प्लक्षशाखायां हृदयं निधायावद्येदिति शालीकिः ' ॥

I 122. 3. पशोः संवदन इति ॥ सूत्रं ' शालीकेर्" यो ह स्माह बौधायनः[२] पृष्ठाभिकामेत्पूषा[३] मा पशुपाः पात्विति ' द्वितीयं पृष्ठाभिकामेत्पूषा[३] मा प्रपथे पात्विति ' तृतीयं पृष्ठाभिकामेत्पूषा[३] माधिपतिः पात्विति ' ॥

I. 122. 9 पशोरभिघारण इति ॥ सूत्रं बौधायनस्य " पृषदाज्येन हृदयमभिघार्याज्येनेतराण्यभिघारयेदिति शालीकिः ' ॥

पशोरासादन इति ॥ पश्वङ्गोचासादयेदिति बौधायनस्तूष्णीमिति शालीकिः ' ॥

I. 122 17. पशोरवदान इति ॥ स ह स्माह बौधायनो हृदयस्य

---

१ संवेष्टोपा स्पृ॰ G (sec. m.) U Bu; संवेष्टाप (पः) स्पृ॰ Bc G (pr. m.) DC Ben H (मन्त्रेणोपस्पर्शनम् the vivarana).

२ प्रथमं ins DC.

३ Thus Bu G (sec. m.); ॰निक्रामे॰ U Bc Ben H; ॰निष्क्रामे॰ DC, but cp Āp. VII. 23. 6 अभिपरजति with Rudradatta's remark.

जिह्वाया वक्षस इत्येतेषामेवानुपूर्वमवद्येत्तृतीयं[1] पात्रावदानं पश्चावत्तिनां कुर्यादित्य"थो ह स्माह शालीकिः सर्वेषामेवानुपूर्वमवद्येन्न चात्र तृतीयमवदानं पश्चावत्तिनां कुर्यादिति ' ॥ २९ ॥

123 9. पशोः संसर्गेन इति ॥ स ह स्माह बौधायन उभयानि[2] संसृष्टेभ्यश्चावद्येत्सुगतानि चेति " सुगतान्येवेति शालीकिः ' ॥

23 13. कुम्भतः श्रीणातीति ॥ सूत्रं बौधायनस्य " समस्तेनैवास्य पार्श्वेन वसाहोमं श्रीणीयादिति[3] शालीकिः ' ॥

23. 16. पशोः प्रतिपरिहरण इति ॥ प्रतिपरिहरेदिति[4] बौधायनो " न प्रतिपरिहरेदिति शालीकिः ' ॥

23. 17. प्रत्याक्रमण इति[4] ॥ सूत्रं बौधायनस्य " जघनेनोत्तरवेदिं परिक्रम्याश्रावयेदिति शालीकिः ' ॥

24 4. दिशां प्रतीज्याया इति ॥ सूत्रं शालीकेर"थो ह स्माह बौधायनः पुरस्ताद्वनस्पतेः समान्यो दिशः प्रतियजेद्दिग्भ्यः स्वाहेति ' ऊर्ध्वोपतिष्ठेत[5] स्वाहा दिग्भ्यो नमो दिग्भ्य इति ' ॥

---

१ एतेषाम् Bu G (sec. m.); एषाम् the other MSS.

२ Thus Bu G (sec. m.); सर्वाणि the other MSS.

३ श्रिणीयादिति Bu, श्रीणातीति the other MSS.

४—४ The words प्रतिपरि० ... ०क्रमण इति left out by all the MSS. exc. Bu and G and U (sec. m.).

५ ०तिष्ठते MSS.

I. 124. 7. वनस्पतेश्चर्यायां इति ॥ सूत्रं बौधायनस्य " पृषदाज्याच्चतुर्गृहीतेन चरेदिति शालीकिः ' ॥

I. 124. 13. वनिष्ठोराधान इति ॥ षडवत्तं संपादयेदिति बौधायनः " सकलमेवेति शालीकिः ' ॥

I. 124. 18. श्रीपयजेष्विति ॥ सूत्रं शालीकेर्"नो ह स्माह बौधायन आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषूपयष्टोपयजेदिति ' ॥

I. 125. 2. गुदतृतीय इति ॥ एकादशधा स्थूलोपयष्टोपयजेदिति बौधायनो " ऽपच्छेदमिति[1] शालीकिः " समस्तमेवैनमनुप्रहृत्य[2] सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ' ॥

I. 125. 4. अथ बर्हिषि हस्तौ निमार्ष्टीति ॥ सूत्रं बौधायनस्यापो ऽयस्मा[3] अवानयेयुरिति[3] शालीकिः ' ॥ ३० ॥

I. 125. 6. स्वरोर्होम इति ॥ सूत्रं बौधायनस्य " चतुर्गृहीते ऽवधाय जुहुयादिति शालीकिः ' ॥

I. 125. 10 पत्नीनां संयाजन इति ॥ सूत्रं बौधायनस्याज्येनैव[4] पत्नीः संयाजयेदिति शालीकिः[4] ' ॥

---

१ ॰पच्छेदमिति Ben, with प the other MSS. and the vivaraṇa cp. XX. 12: 26. 12, XXII. 15 s. f.

२ ॰मेवैतमनु Bu G (sec. m); ॰मेवैतदनु॰ H Ben Be CDUG (pr. m)

३ स्मास्मा अवानये॰ G (sec. m.) Ben; याश्मा अवानये॰ CD; ह्ययस्मा अवानये॰ Bu; यस्मा अवानुनये॰ H; अवानये॰ Be; यस्मा अवानये॰ U.

४ आचार्ययोः instead of बौधायनस्य and औपमन्यवः instead of शालीकिः G (sec. m)

25. 11. उत्तानायै जाघन्यै देवानां पत्नीर्यजति नेष्टा अग्निं गृहपतिमिति ॥ सूत्रं बौधायनस्य " सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः ' ॥

125. 12. उत्तानायै जाघन्यै होत्र इडामवद्यति[1] नेष्टा[2] अग्नीधे[2] षडवत्तमिति ॥ सूत्रं बौधायनस्य " सर्वमेवैतदुत्तानायै जाघन्यै कुर्यादिति शालीकिः ' ॥

125. 15. फलीकरणहोमस्य करण इति ॥ कुर्यादिति बौधायनो " न कुर्यादिति शालीकिः ' ॥

125. 16. ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्यध्वर्युरेव ध्रुवामाप्याय्य समिष्टयजूंषि जुहुयादिति शालीकिः ' ॥

ib. समिष्टयजुषां होम इति ॥ सूत्रं बौधायनस्य " त्रीणि चतुर्गृहीतानि जुहुयादिति शालीकिः ' ॥

126. 6. हृदयशूलस्योद्वासन इति ॥ कुर्वीतात्र समिचाश्च दुर्मित्रा-श्चेति बौधायनो " न कुर्वीतेति शालीकिः ' ॥

126. 10. समिधां करण इति ॥ सर्वे एवार्द्राः सपलाशाः कुर्वीर-न्निति बौधायनो " यजमानश्चैव पत्नी चेति शालीकिः ' ॥

126. 14. बर्हिषः पर्युपोषण इति ॥ वेद्यै दक्षिणेऽंसे पर्युपोषे-दिति बौधायन " उत्तरवेद्या इति शालीकिः ' ॥

---

१ Thus G (sec. m.); इडां समवद्यति the other MSS.

२ नेष्टाग्नीधे Bu GDC; नेष्टाग्नीं भे H Bcu U.

126. 16. सक्तुहोमस्य करण इति ॥ त्रीन्सक्तुहोमान्कुर्यादिति बौधायन '' एकमेवेति शालीकिः '' प्रदाव्य एव सक्तुहोमेन चरेदित्यौपमन्यवः ' ॥

I. 127 6. II. 54. 10. आख्यातं देवतानामुपस्थानम् ॥

I. 127. 8. यूपस्योपस्थान इति ॥ सूक्तं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेतेति शालीकिः ' ॥

I. 127. 10. समन्वानयन[1] इति ॥ सूक्तं बौधायनस्य '' नाद्रियेतेति शालीकिः ' ॥

I. 127. 13. पूर्णाहुत्यै करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

I. 127. 14. दक्षिणायै दान इति ॥ धेनुं वानड्वाहं वा दद्यादिति बौधायनो '' ऽन्यदैकधनमिति शालीकिरन्यदेकधनमिति शालीकिः ' ॥ ३१ ॥ दशमः ॥

॥ इति विंशः[2] प्रश्नः ॥

---

[1] Thus B a HGUC and the vivaraṇa; समन्वायन Ba; समन्वानयन Be; समन्यान D.

[2] On the praśna-number cp. Preface to Vol. II, p. ii.

3. 1. अथातश्चातुर्मास्यानि व्याख्यास्यामः ॥

स ह स्माह बौधायनो यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि ' प्रथमे त्वेव संवत्सरे व्रतं चरेदित्य''न्यो ह स्माह शालीकिः सांवत्सरिकाण्येव खलु[१] चातुर्मास्यानि ब्रह्मचर्यवन्ति भवन्तीति '' यथाप्रयोगमित्यौपमन्यवः ' ॥

3. 5. पयसां मन्त्रामन्त्र इति ॥ उभये सायंप्रातर्दोहा मन्त्रवन्तः स्युरिति बौधायनस्तू'ष्णीका इति शालीकिर''न्यो ह स्माहौपमन्यवो यस्मात्सोमेज्यायै चातुर्मासिकानि पयांसि तूष्णीकानि स्युरथोर्ध्वं[२] सोमेज्यायै मन्त्रात्तभेरन्नित्य''न्यो[३] ह स्माहाज्जीगविः पञ्चैवैतानि पयांसि मन्त्रवन्ति भवन्ति[४] दर्शपूर्णमासयोर्मैत्रावरुण्यामिक्षायां दाक्षायणयज्ञे कौण्डपायिन्ये सौत्रामण्यामिति ' ॥

3. 8. वैश्वानरपार्जन्ययोः[५] करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

3. 9. फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां विश्वेभ्यो देवेभ्यो वत्सा अपाकृता भवन्तीति ॥ सूत्रं बौधायनस्योदगयन आपूर्यमाणपक्षस्य पुण्याह इति शालीकिः ' ॥

---

१ Om. H *Bo*.

२ Thus H Ben Bo G (pr. m.) U DC Keś , सुरत ऊर्ध्वं Bu ; थथ effaced in G.

३ Thus Bu ; मंत्रा G ; मंचा the other MSS.

४ भवंतीति Bu Be G (sec. m.).

५ Thus U (sec. m.) ; °पार्जन्यायाः the other MSS.

I. 128. 7. प्रसूमयं[1] प्रस्तरमिति[1] ॥ सूत्रं बौधायनस्य" सर्वमेवैतद्बर्हिः प्रसूमयं स्यादिति शालीकिः' ॥

I. 129. 12. पञ्चहोतुर्होम इति ॥ सूत्रं बौधायनस्योपवसथ एव पञ्चहोतारं जुहुयादिति शालीकिः' ॥

I. 131. 5. प्रयाजानामनुमन्त्रण इति ॥ चतुरश्चतुर्भिरनुमन्त्र्य[2] पञ्चमेनेतरानन्वभिमृशेदिति[3] बौधायनश्चतुरश्चतुर्भिरनुमन्त्र्य सर्वेषां पारे पञ्चमेनानुमन्त्रयेतेति[4] शालीकिः' ॥

एककपालानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्तूष्णीका इति शालीकिः' ॥

एककपालानामवदान इति ॥ स ह स्माह बौधायनश्चातुर्मास्यिकानामेव नावद्येदथेतरेषामवद्येदित्यथो ह स्माह शालीकिस्त्र्यम्बकाणामेवावद्येदथेतरेषां[5] नावद्येदित्यथो ह स्माहौपमन्यवो य एव वैश्वदेवपशुषि तस्य नावद्येदथेतरेषामवद्येदिति' ॥

---

१ ॰मयः प्रस्तर इति MSS. exc. Bu U (pr. m.) and the vivaraṇa; the accusative as XXIII. 18: मार्षिः पूर्वं कमण्डलुमिति।

२ Thus Be; चतुर्भिश्चतुरो G (sec. m.); चतुरश्चतुर्भिश्चतुरो G (pr. m) चतुर्भिश्चतुर्भिश्चतुर्भिरन् D; चतुर्भिश्चतुर्भिरन्॰ Ben C.

३ ॰मृशमीयादिति Bu G (sec. m.); मृशीयादिति (without अनु) Ben HDC; पंचमीयदिति Be.

४ ॰मंत्रयेदिति MSS

५ ॰हरायामेवा॰ Be U (sec. m.); ॰हराणमेवा॰ Ben; ॰हरयामामेव G (sec. m.); ॰हरेयमेवा॰ Bu; ॰करयमेवा॰ HU (pr. m.); ॰हरयमेवा॰ C (pr. m.), ॰हरायमेवा॰ C (sec. m.).

एककपालानामभिहोम इति ॥ यः स्रुचि संस्रावः स्यात्तेनाभिजुहुयादिति बौधायनश्चतुर्भिश्चतुर्भिर्ऋतुनामभिरेकैकमिति शालीकिः ॥ १ ॥

एककपालानामाश्रयस्यानुसंहरण इति ॥ अनुसंहरेदिति बौधायनो नानुसंहरेदिति शालीकिः ॥

132. 4. वाजिनस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन उच्चैरिति शालीकिः ॥

132. 6. वाजिनस्य भक्षण इति ॥ सूक्षं शालीकेर्वचो ह स्माह बौधायनो ऽवघ्रभक्षणेनैवेतरे[1] भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदिति ॥

32. 17. निवर्तन इति ॥ निवर्तनेनोपवाप्योभयं[2] केशश्मश्रु वापयीतेति बौधायनो निवर्तनेनोपवाप्य[2] श्मश्रूण्येव वापयीत न केशानिति शालीकिर्निवर्तनेनोपवाप्य[2] नैव श्मश्रूणि वापयीत न केशानित्यौपमन्यवः ॥

133. 6. वरुणप्रघासेषु दक्षिणस्य विहारस्य पात्राणां करण इति ॥ सूत्रं बौधायनस्य सौवर्णानि वा राजतानि वा स्युरिति शालीकिः शमीमयानीत्यौपमन्यवः ॥

---

१ ०भक्षणेनै० Bu G and U (sec m.); ०भक्षेणै० DHC Ben Be G and U (pr. m.).

२ Uncertain reading; ०नोपवाप्य each time H Ben Be UDG (pr. m.) C, ०नोवाप्य G (sec. m.), thus also (besides ०नोपाप) Bu, the vivarana seems to have read also ०नो वाप्यः; it runs: निवर्त(ने)नो वाप्यः चेष्टा मलत्या विभज्य उशब्दः च (read च ?) शब्दस्यार्थे।

स्रुवयजुषोर्हरण इति ॥ व्यतिचारꣳ स्रुवयजुषी हरेयातामिति[1] बौधायनः" सहेति शालीकिः' ॥

आज्यस्यावेक्षण इति ॥ दार्शपौर्णमासिकायै दक्षिणत उपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति बौधायनो" वेदिसंधावुपविश्य दक्षिणमवेक्ष्योत्तरमवेक्षेतेति शालीकिर्"मध्यत[2] इत्यौपमन्यवः' ॥

I. 133, 8. ऐषीकꣳ शूर्पमिति ॥ सूत्रं बौधायनस्य" दर्भमयं वा कुशमयं वेति शालीकिः" प्रत्यक्षमित्यौपमन्यवः' ॥

I. 137, 12. शूर्पस्यानुप्रहरण इति" अनुप्रहरेदिति बौधायनो" नानुप्रहरेदिति शालीकिर्"द्भिरभ्युक्ष्य भुञ्जीतेत्यौपमन्यवः' ॥

I. 138, 8. आमिक्षयोरवदान इति ॥ सूत्रꣳ शालीकेर्"नो ह स्माह बौधायन आमिक्षयोरवदाय मेधीमवदध्यात्[3] शमीपर्णकरीरसक्तूनामवद्येद् ग्रामीणा ह्येते भवन्तीत्यु"त्तमेनावदानेन सर्वं विघ्नलोपꣳ[4] समवदध्यादित्यौपमन्यवः[4] ' ॥ २ ॥

.133, 4 (?) मारुत्यै चर्याया इति ॥ सूत्रं बौधायनस्योत्तर एवाग्नौ मारुत्या चरेदिति शालीकिः' ॥

---

१ Thus (and cp. XXV. 1 s. f) Bu Ben HGU; हरियातामिति DC; हरेतामिति Be.

२ मध्य Bu G (sec m.).

३ Thus H Ben DC; मेक्षुपद॰ Bu; मेक्षावुपद॰ Be G and U (sec. m.).

४ Thus Bu Be U (sec. m.); ॰लोपमवदध्या॰ H Ben. G; ॰लोप- मवध्या॰ D; ॰लोपमवध्या॰ C.

139. 4. माहत्ये मेचणस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः [1] ॥

40. 10. अवभृथ इति ॥ सूत्रमाचार्ययोर्द्वैधं ह स्माहौपमन्यवस्तुषैश्च निष्कासेन चावभृथमवेयादिति [1] ॥

आम्नातमुदकान्तस्य प्रत्यसनम्[१] ॥

आम्नातमास्तरणम्[१] ॥

40. 14. 67. 16. आम्नातꣳ समिधां करणम् ॥

41. 15. आनीकवतस्य निर्वपण इति ॥ पाणिमंमर्शेनादित्यस्योदयमाकाङ्क्षेतेत्याचार्ययोर्मुष्टिनैव प्रदीव्यन्नित्यौपमन्यवः॥ साकꣳ रश्मिभिः प्रचरेदित्यौपमन्यवीपुत्रः ॥ एष एवापि सांतपनस्य प्रदेश एष कैडिनस्य ॥

41. 18. गृहमेधीयस्य मन्त्रामन्त्र इति ॥ मन्त्रवत्स्यादिति[२] बौधायनस्तूष्णीक इति शालीकिः [1] ॥

गृहमेधीयस्य निर्वपण इति ॥ पवित्रवता पात्रेण मन्त्रवन्तमिति[३] बौधायनो ऽपवित्रेण तूष्णीकमिति शालीकिः [1] ॥

---

१ *Of these two* dvaidhas the first seems to refer to Vol. I. 261. 17; the second, according to the vivaraṇa, to III. 67. 16: आम्नातमास्तरणम् । उभयं (sc द्वैधं) समिधां करणेन व्याख्यातं सर्वं वा दर्शपूर्णमासौ वेति नान्यदिहाख्यातमस्ति यस्य विकल्पः सर्वमेवाख्यानं तत्राविशेषणमनर्थकं स्यात् ।

२ मन्त्रवत्स्यादिति DC; मन्त्रवत्स्यादिति H.

३ मंत्रवदिति G (sec. m.).

I. 141. 20. गृहमेधीयस्य श्रपण इति॥ पयसि श्रपयेदिति बौधायनो ऽप्स्विति शालीकिः॥

शाकलानां करण इति॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः॥

I. 141. 22 गृहमेधीयस्यासादन इति॥ दात[1] एव बर्हिष्यासादयेदिति बौधायनो ये ऽन्ये ऽनुपयुक्ताः कुशाः स्तृतेष्विति शालीकिः॥

I. 142. 1. गृहमेधीयस्य चर्याया इति॥ उपांशु चरेदिति बौधायन उच्चैरिति शालीकिः॥

शाकलानामनुप्रहरण इति॥ अनुप्रहरेदिति बौधायनो नानुप्रहरेदिति शालीकिः॥

I. 142. 5. प्रतिवेशस्य श्रपण इति॥ अन्वाहार्यपचने श्रपयेदिति बौधायनो यामायनाविति शालीकिः॥

I. 142. 10. पूर्णदर्व्यस्य[2] होम इति॥ सूत्रमाचार्ययोर्व्याहृतौ ब्रह्मणो हिंकारे[3] जुहुयादिति गौतमः॥ ३॥ प्रथमः॥

I. 143. 19. महापितृयज्ञस्य बर्हिषीति॥ समूलमेतद्बर्हिर्भवतीति बौधायनस्तत्र नास्ति प्रत्यभिमर्शन इति सातिशेषं[4] भव-

---

१ दात Ben H (as partic from दाति); दप Bo; C D om. दात एव; विश्व G and U (sec. m ), thus (var विश्व) the vivarana

२ °दर्व्यस्य Bu, the vivarana; °दर्वस्य H Ben Be G U D C.

३ °कारेषु H G D C U (pr. m.); °कारेष्वभिक्रु° U (sec. m.).

४ Thus H Ben G U D C; Bo defect.; सशेषं Bu.

तीति शालीकिस्तत्र सिद्धः प्रत्यभिमर्शन इति ॥ निर्मूलमेवैतत्सुत्वादित्यौपमन्यवः[१] ॥

144 16. अथैतदभिवान्यायै दुग्धमर्धपात्रमिति ॥ सूत्रं बौधायनस्याथ यदि कनीयः स्यादद्भिरभ्युन्नोयेति[२] शालीकिः ॥

144. 9. ५ तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्धस्यन्ते यवानिति ॥ सूत्रं शालीकेर्यो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[३] स्यादिति ॥

145. 1. आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-
१० दिति बौधायनो ऽग्रेणातिहायेति शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ॥

145. 2. वेदे करण इति ॥ उपनिष्क्रम्याग्न्यगाराद्दक्षिणे[४] पूर्वे ऽवान्तरदेशे कुर्यादिति बौधायनो ऽन्तरेवैतां दिशमिति शालीकिरन्वाहार्यपचनमेवाभित इत्यौपमन्यवः ॥

145 3. १५ अन्वाहार्यपचनस्योपसमिन्धन इति ॥ स्वे स्थान उपसमिन्धीरन्निति बौधायन इध्ममेवातिप्रणयेयुरिति शालीकिः ॥

---

१ सुत्वा॰ Be G and U (sec. m); लूनौषा॰ Ben H Bu C D G and U (pr. m.).

२ Thus G U D H C; without अभि Be; ॰भ्युन्नोयेति Ben Bu.

३ ॰ष्कृत् स्यादिति G U C D H Ben; ष्कृत स्यादिति Be; ॰ष्कृतं स्यादिति Bu; cp XXI. 16, XXII. 11.

४ दक्षिणे Bu G; दक्षिण Ben Be U D C.

I. 145. 12. आज्यग्रहाणां ग्रहण इति ॥ पञ्चगृहीतानि वा षड्गृहीतानि वा स्युरिति बौधायनः" षड्गृहीतान्येवेति शालीकिः' ॥

प्रस्तरस्य मन्त्रामन्त्र इति ॥ ग्रहणं चैवास्य न्यसनं च तूष्णीकं स्यादथैतरन्मन्त्रवत्स्यादिति बौधायनः" संभरणं[1] चैवास्य न्यसनं च तूष्णीकं स्यादथैतरन्मन्त्रवत्स्यादिति शालीकिर्धारणन्यसनमेव[2] तूष्णीकं स्यादथैतरन्मन्त्रवत्स्यादित्यौपमन्यवः' ॥

I. 145. 15. त्रिरपसलैः परिस्तृणन्पर्येतीति ॥ सूत्रं बौधायनस्य" यथोत्पन्नेनैव संस्तृणीयादिति शालीकिः' ॥

वेद्यै स्तरण इति ॥ सूत्रं बौधायनस्योर्णाम्रदसं त्वा स्तृणामीत्येव ब्रूयादिति शालीकिः' ॥ ४ ॥

I. 145. 17. परिधीनां परिधान इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनः सर्वान्परिधीन्परिदध्यात्पिण्डकर्मणि क्रियमाणे दक्षिणतश्चोत्तरमुपनिदध्यादिति[3]' ॥

I. 146. 2. हविषामुद्वासन इति ॥ सूत्रं बौधायनस्य" यथाहृतमेव[4] हवींष्युद्वासयेदिति शालीकिः' ॥

हविषां संचरो[5] ऽध्वर्योश्चेति ॥ दक्षिणेनेति बौधायन" उत्तरेणेति शालीकिः' ॥

---

1 संवरणं Bu

2 Thus G (sec. m.); धारन्यसन॰ the other MSS.

3 Thus all exc. Bu (दक्षिणश्चोत्तरमु॰).

4 Thus G and U (sec. m.), D; यथाहृत॰ the other MSS.

5 संचरो all the MSS. exc. Bu (संचरे), the vivaraṇa has also the nominative.

विपरिक्रामन्त्येत ऋत्विजो विपरिहरन्ति हवींषीति ॥ सूत्रं बौधायनस्य ″ नात्र हवींष्यपि विपरिहरेयातामिति[1] शालीकि″र्नात्र हवींष्यपि विपरिहरेयातामध्वर्युश्चैवाग्नीधश्च[1] विपरिक्रामेतामित्यौपमन्यवः[2] ' ॥

आश्रावण इति ॥ ओं स्वधेति बौधायन ″ आ स्वधेति शालीकिः ' स्वधेत्यौपमन्यवः ' ॥

प्रवर इति ॥ सूत्रमात्रयं गीर्दिद्राऽस्वकिलमित्यौपमन्यवः ' ॥

आख्यातं पिण्डानां दानम् ॥

आख्यातमाञ्जनाभ्यञ्जनयोः ॥

आख्यातं पिण्डानामनुप्रहरणम् ॥

त्रैयम्बकाणां मन्त्रमन्त्र इति ॥ मन्त्रान्तः स्युरिति बौधायन″स्तूष्णीका इति शालीकि″र्येनानेककपाल एव श्रपयेदित्यौपमन्यवः ॥

एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो ″ ग्रामाग्नेरिति शालीकिः ' ॥

एतत्समादाय गार्हपत्यमुपतिष्ठन्त इति ॥ स ह स्माह बौधायन उभय[3] एव[3] मन्त्रो भवत्याध्वर्यवश्च याजमानश्चेति ″ याजमान एवेति शालीकिः ' ॥

---

१ Thus all; read probably विपरिहरेतामिति ।

२ Thus Be; ०क्रामेयाताम मि० the other MSS.

३ Thus G D C H Bo ı U (pr. m.); उभयस्य एव U (sec. m.); उभयस्य च एव Bo; उभयेव Bu.

I. 152 5. दैयम्बकाणामुत्खेदन[1] इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनस्त्रिरेवाभ्यतिपरान्परीत्य[2] त्रिरुत्खिदेद्भगाय त्वा भगाय[3] त्वेति । ॥ ५ ॥

I. 152 10. अथैनान्यजमानस्याञ्जलावावपतीति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेणावपेत्तूष्णीं पत्न्यै च[4] भगकामायै चेति । ॥

I. 153. 1. अथैनान्मूत ओप्य नीललोहिताभ्यां सूत्राभ्यां विषज्य वृक्षे वा स्थाणौ विगावायां[5] वा बध्नातीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

I. 153. 5. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो यथोपपादमिति शालीकिः । ॥

I. 153. 20. अनाभीरोयपदपं[6] इज्याया[6] इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो य एवात ऊर्ध्वमापूर्यमाणपक्ष आगच्छे-

१ ॰मुत्खिदन G (sec. m.) Be and the vivarana; ॰मुत्खिदमन Bu.

२ Thus G and U (sec m) and the vivarana (अभ्यतिपराष्ट्रत्खिदन्); ॰त्रिरेवाभित॰ the other MSS.

३ Thus Bo G and U (sec. m), भगेभ Ben H D C G and U (pr. m.).

४ चे (sic) Be, all the other MSS. om the word.

५ Thus Ben H U D C; विगाव्यां Be Bu G (sec. m.).

६ ॰पदपं इज्याया Ben C; पदपा इज्याया U D; अपदपा इज्यायाया H; पदपेज्याया Bo G (sec. m.) and the vivarana.

त्तस्मिञ्छुनासीरीयपदधा यजेत । चयोदशस्यैवैतन्मासस्यापौष्यार्थे[1] दृष्टं भवतीति । ॥

वेधे करण इति ॥ दार्शपौर्णमासिकी स्यादिति बौधायनः । पाशुबन्धिकीति शालीकिः । ॥

दक्षिणानां दान इति ॥ सूत्रं शालीकेर्ङ्चो ह स्माह बौधायनो हिरण्यं वैश्वानरे दद्याद्धेनुं पार्जन्ये द्वादश वैश्वदेवे द्वादश वरुणप्रघासहविःषु तिस्र आनीकवते तिस्रः सांतपने चतस्रो गृहमेधीय ऋषभं पूर्णदर्व्ये[2] तिस्रः क्रैडिने द्वादश महाहविःषु तिस्र आदित्ये द्वादश शुनासीरीयहविःष्विति ङ्चो ह स्माहौपमन्यवश्रुतःषष्टिश्चातुर्मास्यदक्षिणाः समाम्नाता भवन्ति । तास्वेवाधिगच्छेद्यासांस्त्वेतावन्ति मन्यान्यौदनान्येतावतो[3] दद्यान्नो हैवैतं काममवाप्नोतीति[4] । ॥

चातुर्मास्यानामन्त इति ॥ सोमान्तानि स्युरिति बौधायनः ॥ पश्वन्तानीति शालीकिः ॥ सवनेष्ट्या यजेतेत्यौपमन्यवः । ॥ ६ ॥ द्वितीयः ॥

---

१ चयोदशस्यैवैतन्मा॰ Be H G U (pr. m.); चयोदशस्य ह्येवैतन्मा॰ U (sec. m.); चयोदशाह्ने -- वैतान्मा॰ Bu, चयोदशस्य वैतन्मा॰ Ben C U.— ॰पौष्यार्थे Ben G U D C; ॰मौष्यार्थे Be; ॰भौष्यार्थे Bu, ॰पौषार्थे H.

२ Thus G; ॰दर्वे the other MSS.

३ Thus G U D C and Kes; संथान्योदनान्येत वतो Ben; सव.न्योदनान्येतावतो Bu; संथान्योदनान्येतावतो H; सथ.न्यंतावतो Be (cp. Vol. I. 44. 15).

४ इति is not found in my copies.

I. 157. 7. अथास्य प्राङ्मुखस्य दक्षिणं गोदानमद्भिरुनत्तीति ॥ सूत्रं बौधायनस्योभयमेवाप्यस्य मन्त्रेण कुर्यादिति शालीकिः ॥

I. 158. 1. अभ्यङ्क्त इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो महीनां पयो ऽसीत्यादाय वर्चोधा असि वर्चो मयि धेहीत्यभ्यङ्क्तीति ॥

I. 158. 4. आङ्क्त इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो वृत्रस्य कनीनिकासीत्यादाय चक्षुष्पा असि चक्षुर्मे पाहीत्याङ्क्तीति[1] ॥

I. 158. 5. त्रिरनिधाव दिक्षणमक्षु पञ्च कृत्व आङ्क्त इति ब्राह्मणं पञ्च कृत्व एव दक्षिणं पञ्च कृत्व उत्तरमिति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 158. 7. पवन इति ॥ स ह स्माह बौधायनस्त्रीन्सप्तवर्गान्कृत्वा तेषामेकेन प्राणदेशे पवयेद्यथेतरेण नाभिदेशे ऽथेतरेण शुल्कदेशे ऽथैनान्यद्भिरभ्युक्ष्योदञ्चुत्क्षिदेदित्यनो[2] ह स्माह शालीकिर्दर्भाभ्यां पवयति त्रिभिः पवयतीत्येतैरेनमेकविंशत्यावग्राहम्[3] पवयित्वाथैनान्यद्भिरभ्युक्ष्योदञ्चुत्क्षिदेदित्यनो ह

[1] Thus Ke⁴ only; पाहीत्यंक्त इति G U, ॰त्यांक्त इति D C; the other MSS. corrupt. An optative is required.

[2] Instead of उत्क्षिदेत्, the reading of Bo (and once उत्क्षिदे॰ Bu), here and infra, the MSS. have उत्क्षिपेत्।

[3] Uncertain; G (sec. m) as given in the text, पवयतीत्येषमेकं विंशत्या॰ Bu; पवयतीत्युत्तरैरेवमेकविंशत्या॰ U; पवयतीत्युत्तरैरेकमेकविंशत्या॰ H; पवयतीत्युत्तरैकविंशत्या॰ C D; Bo wholly corrupt.

स्माहौपमन्यवः समस्तैरेवैनं 'प्राणदेशे पवयेच्चित्पतिस्त्वा पुनातु वाक्पतिस्त्वा पुनातु देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिरिति ' देवतायां देवतायामतिवाच्याद्भिरभ्युक्ष्योदश्युत्विदेदिति[२] ' ॥

अथैनꣳ सव्ये पाणावभिपात्येति ॥ दक्षिण[३] इति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

अथैनमग्रेणाहवनीयं पर्याणीयेति ॥ जघनेनेति प्रोक्तं ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

पत्न्या उदानयन इति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायनः शुचिमेवैनां पवयित्वा सर्वयर्चोदानीय जघनेन गार्हपत्यमुपवेशयेदिति ' ॥

पत्न्या दीक्षण इति ॥ सूत्रमाचार्ययोर्वो ह स्माहौपमन्यवः प्रायणीये हविष्कृदन्ते पत्नीं दीक्षयेदिति ' ॥

न यजमानं व्रतमुपनयतीति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायनः सौमिके तन्त्रे पौरोडाशिकं याजमानमभ्यावर्तेतान्यच्च यज्ञस्य पुनरालम्भादिति ' ॥

न पत्नीꣳ संनह्यतीति ॥ सूत्रꣳ शालीकेर्वो ह स्माह बौधायनो दीक्षणीयायामेनाꣳ संनह्य सꣳस्थितायां विमु-

१ Thus Be; एव not found in G (pr. m ) Bu H U D C; एनं not in G (sec m )

२ देवतायां once in Bu D H C.

३ °क्षिणम Bu and one copy of the vivarana.

स्याध्वरिकेण सह याजमानेन[1] तन्त्रेतन्त्रे वीत[2] ऊर्ध्वं पौरोडाशिकेन कर्मणाभिमन्त्रयेदिति ॥

159 15 ध्रुवाया आप्यायन इति ॥ स ह स्माह बौधायन उभावेव ध्रुवामाप्याययेतामध्वर्युश्च यजमानश्चेत्यध्वर्युरेव ध्रुवामाप्याय्य दीक्षाहुतीर्जुहुयादिति शालीकिः ॥

I 159 16 दीक्षाहुतीनां होम इति ॥ सूत्रं बौधायनस्य चतुर्थीं[3] पञ्चमीमनुद्रुत्य जुहुयादिति शालीकिरपो ह स्माहोपमन्यव आकूत्यै प्रयुज इति तिस्रो ऽन्तरा हुत्वा सरस्वत्यै पूष्णे ऽग्नय इत्यपातीत्यापो देवीर्बृहतीर्विश्वशम्भुव इत्येता जुहुयादयौद्ग्रहणमिति ॥ ८ ॥ तृतीयः ॥

I 160 10 कृष्णाजिनयोरिति ॥ द्वाभ्यां समुञ्जिताभ्यां[4] दीक्षयेदिति बौधायनो ऽथ[5] यद्यन्यतरत्स्याद्दक्षिणमीर्मं प्रतिषीव्येदित्येकमेव[6] कृष्णाजिनं स्यादिति शालीकिः ॥

I 160 11 शुक्लकृष्णयोः सन्धान इति ॥ शुक्ले ऽङ्गुष्ठो भवति कृष्णे ऽङ्गुलिरित्येवं शुक्लकृष्णे सन्दध्यादिति बौधायन

---

१ याजमा० G and L (see m) and the vivarana याजमा० the other MSS

२ वात G (see m) L Be the vivarana

३ चतुर्थी G (see m) D

४ Thus G (see m) only समुञ्जिताभ्यां the other MSS

५ Effaced in G

६ इति before एकमेव found in G only (see m)

पृथेनैवैतद्दंधिं संस्पृशेदिति शालीकिरथेनमेकाङ्गुल्यैव संस्पृशेदित्यौपमन्यवः ॥

13 कृष्णाजिनस्याभिसर्पण इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनः पूर्वं वोत्तरं वार्धं विगृह्णीयात्तृतीयेन मध्यदेशं गच्छेदिति ॥

17, 3 5 आख्यातं ग्रन्थिकरणम् ॥

22. अथास्य प्रदक्षिणमुष्णीषेण शिरो वेष्टयतीति ॥ सूत्रं बौधायनस्य वाससैव संप्रच्छन्नः स्यादिति शालीकिः ॥

1. 4 कृष्णविषाणायाः प्रदान इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेण कृष्णविषाणां प्रयच्छेत्तूष्णीं वेदान्तमुद्धन्यात्तूष्णीं केशान्तमुपस्पृशेदिति ॥

1. 9. दण्डस्य प्रदान इति ॥ सूत्रमाचार्ययोरथो ह स्माहौपमन्यवः समस्तेनैवास्मै मन्त्रेण दण्डं प्रयच्छेत्सूपस्था देवः वनस्पतिरूर्ध्वो[२] मा पाह्योदृच इति[३] ॥

1. 11. 14 अथेमं यज्ञस्यान्वारम्भं वाचयतीति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनो मष्टिकरणाः खल्वेते मन्त्रा दृष्टा भवन्ति

---

१ Thus corrected in accordance with the vivarana, which runs प्रथमेन (sic) हस्तसीन, प्रथमेनैवैत G (sec m.); श्रोमैवैतं Bu, श्यमेवैन UHDC.

२ Thus Be; before ऊर्ध्वो H ins इति; D U G C abbreviate the mantra, giving only the first and the last words

३ Thus Be, C D U G H Bu add यजमानः प्रविष्टस्मानि, apparently a reminiscence of the text proper (Vol. I., 161, 12).

स्वाहा यज्ञं मनसा स्वाहा द्यावापृथिवीभ्याᳲ स्वाहोरोरन्तरिक्षात्स्वाहा यज्ञं वातादारभ इति ॥

I 161 13 मुष्टिकरण इति ॥ वाचोयमसंयुक्तं[1] मुष्टिकरणᳲ स्यादिति बौधायन " आवान्तरदीक्षायै विसर्गादिति शालीकिः ' ॥

I 161 14 आवेदन इति ॥ यथावर्णमावेदयेदिति बौधायनो " ऽदीक्षिष्टायं ब्राह्मण इत्येव ब्रूयादिति शालीकिः ' ॥

I. 162 14 व्रतदोहन इति ॥ सूत्रं बौधायनस्यौपदारिकमेव[2] यजमानव्रतᳲ स्यादिति शालीकिः ' ॥ ९ ॥

I 163 8. यजुषोरनुषङ्ग इति ॥ आ कृष्णाजिनप्रासनादनुषक्तेतामिति[3] बौधायन " आवान्तरदीक्षायै विसर्गादिति शालीकिरौ दक्षिणानयनादित्यौपमन्यवः[4] ' ॥

I. 163 11. संवेशनयजुषीति[5] ॥ सूत्रᳲ शालीकेर्नो ह स्माह बौधायनो ऽग्ने त्वᳲ सु जागृहीत्येव संविशेद्व्रतयिष्यन्नप आचामेद्देवीं धियं मनामह इति ' ॥

I 164 12. अथ सनीहारान्प्रहिणोतीति[6] ॥ अन्यतोयशद्रयोरिति

---

१ Thus G (sec. m.) and the vivarana, वाचोयमसं॰ Be H U G (pr. m.); वाचंयमसं॰ D C, वाचोयम्यसं॰ Bu.

२ ॰पदाहा U D H Be C; cp. XXI. 19 init.

३ ॰षक्तेतामिति H Bu G U D C; ॰षक्तेदिति Be.

४ Thus Be, the vivarana and Keś; दक्षिणादानादि॰ H Bu G (sec. m.) U D C, दक्षिणापदनादि॰ G (pr. m.).

५ यजुषोरिति H, यजुषी इति U D C.

६ सनी॰ Be; सनि॰ Bu G; संनि॰ D U C; सह॰ H.

बौधायनो " ऽन्यत्रोर्मैरिति[१] शालीकिः ' सर्वान्यज्ञमिद्भुय इत्यौपमन्यवः ' ॥

.11. संवेशनयजुःप्रबुद्धयजुःप्रयाणयजुःपर्याणयजुरिति[२] ॥ अनुपङ्क्तीण्येतानि[३] भवन्तीति बौधायनः " सकृत्सकृतान्येवैतान्यह्नि[४] वा रात्रियै वा स्युरिति शालीकिः ' ॥

.16 दक्षिणानां प्रतिग्रह[५] इति ॥ स ह स्माह बौधायनो यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्पुनरप्यागतं[६] मन्त्रेणैव प्रतिगृह्णीयादित्यथो " ह स्माह शालीकिर्यस्य कस्य च जातस्य मन्त्रेण प्रतिगृह्णीयात्प्रतिगृहीतमेव तस्य स्यादागन्त्वेवास्यात[७] ऊर्ध्वं मन्त्रेणैव प्रतिगृह्णीयादिति ' ॥

.21. अविज्ञाताये दान[८] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

१ ऽन्यत्रान्तैरिति U D C H, on the instrumental cp Speyer Sanskrit Syntax § 107.

२ •पर्याण• instead of •परियाण• all

३ Thus Bu U G (sec. m ) and the vivaraṇa, अनुपंक्तीहैयतानि H G (pr. m.); अनुपंगास्येतानि Be, D C corrupt

४ सकृत् twice U Be

५ प्रतिग्रह G and U (sec. m.) and the vivaraṇa, •ग्रहण G (pr. m.) U (sec. m.) and the other MSS

६ Thus H G (pr. m ) U D C; •प्यायतं G (sec. m.), •प्यागतं Bu; •प्यागतं Be

७ Reading, meaning and interpunction doubtful, स्यादागन्त्वेवास्यात G (sec m ); स्यादागन्त्वेवास्यात G (pr m ); स्यादागतैवास्यात Be, स्यादंगत्वेवास्यात U; •दंगत्वेवास्यात D; स्यादंगत्वे• C.

८ विदाय U D Be C, the passage is missing in H.

I. 165. 10. प्रयाण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 165. 12. अथ यद्येनं यान्तं व्रतवेलोपाधिगच्छतीति ॥ मथित्वाग्नीन्विहृत्य व्रतयेदिति बौधायन" उत्तरतो ऽरणी निधाय[1] दक्षिणतः परिश्रित्य व्रतयेदिति शालीकिः' ॥

I. 165. 14. अथ यद्यपर्याणा अप उपाधिगच्छतीति ॥ सूत्रꣳ शालीकेर्"नो ह स्माह बौधायनो यद्येवापर्याणा अप उपाधिगच्छेत्स्मपेद्देवीरापो अपां नपाद्य ऊर्मिर्हविष्य इन्द्रियावान्मदिन्तमस्तान्वो[2] गृह्णामीति' चीन्लोष्टानाददीत' तेषामेकमुदकान्ते निदध्यात्तं वो मावक्रमिषमित्यथान्यं ब्वꣳसयन्ननुद्रवेदच्छिन्नं तन्तुमित्यथान्यमुदकान्ते निदध्यात्पृथिव्या अनु गेषमिति' सं वा गाहते सं वा तरति' सेतुमेव कृत्वात्येतीति ब्राह्मणम्' ॥ १० ॥ चतुर्थः ॥

I. 166. 11. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्यापरोहितꣳ स्यादिति शालीकिः' ॥

I. 166. 12. अꣳशूपहणे हिरण्य इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिः' ॥

I. 167. 2. देवयजनस्याध्यवसान इति ॥ सूत्रमाचार्ययोर्"नो ह स्माहौपमन्यवः पुरस्तादेवैतत्त्रैविध्यगतेषु देवयजनमध्यवसेदिंज्ञायते या वा इयꣳ सर्वैव वेदिरिति' ॥

I. 167. 4. III 20. 9. (?) आख्यातं प्रायणीयस्य निर्वपणम्' ॥

---

१ After निधाय U Be ins. तस्मात्, C D तस्य।

२ तान्वो G D C Be. the vyutapa; संवो H U; Bu defective

67. 12. प्रायणीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः [1] ॥

67. 13. प्रायणीयस्यासादन इति ॥ पड्डीशासादयेदिति बौधायनस्तूष्णीमिति शालीकिः [1] ॥

67. 14. प्रायणीयस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः [1] ॥

69 11 आदित्यस्योदीचण इति ॥ हिरण्यमन्तर्धायादित्यमुदीचयेदिति बौधायनो " ऽनन्तर्धायैवेति शालीकिः [1] ॥

69 13 सोमक्रयण्या अतिविसन इति ॥ सदसः काले ऽतिविसृजेदिति बौधायन " उपरवकाल इति शालीकिः [1] ॥

69 15 सोमक्रयण्ये पदस्यानुनिक्रमण[1] इति ॥ अतिक्रान्तायै इष्याकालं दक्षिणस्य पूर्वपदस्यानुनिक्रामेदिति[1] बौधायनो " महावेदिमेवातिक्रान्तायै यस्यैव[2] कस्य[2] चेति[2] शालीकिः [1] ॥

69 21 सोमक्रयण्ये पदस्य परिलेखन इति ॥ स्रुचस्य शालीकेरु हो ह स्माह बौधायन स्फ्येन च कृष्णविषाणया च पदं परिलिखेदन्तरतः कृष्णविषाणा स्यादिति [1] ॥ ११ ॥

70 10. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो " यथोपपादमिति शालीकिः [1] ॥

---

१ °नुनिक्र° all (C D only °नुनिष्क्र°); *this reading (given by Tr) is also to be restored* VI. 12: 169 16, *see* TS VI 1 8 1.

२ यस्यैव कस्य चेति Bu G. (sec. m.), यस्यैव कस्य चेति Be; यकस्य चेति C H D G (pr. m.)

I.171.1. राज्ञ उपस्थान इति ॥ स ह स्माह बौधायन उपमा[1] नामेयमोषधिर्भवति[1]' तां दूतीं कुर्वीतैष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूताच्छन्दोमानाꣳ साम्राज्यं गच्छेति मे सोमाय ब्रूतादित्य"न्यो[2] ह स्माह शालीकिः प्रत्यक्षः खल्वयꣳ राजा भवति प्रत्यक्षवदेवोपतिष्ठेतैष ते गायत्रो भाग एष ते त्रैष्टुभो भाग एष ते जागतो भागश्छन्दोमानाꣳ साम्राज्यं गच्छेति' ॥

I.171.9 राज्ञो मान इति ॥ सूत्रं बौधायनस्य" निगदमेवैतामृचं पच्छः कृत्वा मिमीतेति[3] शालीकिः' ॥

I.172.5. राज्ञः पणन[4] इति ॥ सूत्रं बौधायनस्य" गवा ते क्रीणानीत्येव ब्रूयादिति शालीकिः' ॥

I.172.8 अजाया उपनिग्रहण इति ॥ सूत्रं बौधायनस्यानुपनिगृह्णन्नेवाजां मन्त्रं जपेदिति शालीकिः' ॥

I.197.1. मैत्रावरुणस्य दण्डप्रदान इति ॥ सूत्रमाचार्ययोर"न्यो ह ११.

---

१ Instead of उपमा नामेय॰ H C D U read उपस्थाना स्थय॰ ।— ओषधिर्भ॰ G (sec m.), ओषधीभि॰ H Bu C D U (pr m.); ओषधीभिर्भ॰ Be U (sec m.)

२ The mantras are given partially abbreviated in the MSS.

३ मिमीते इति or मिमीत इति MSS.

४ Thus Bu G (sec m.) and the vivaraṇa, पण Be H C D U G (pr. m.)

स्याहौपमन्यवः सोमविक्रयिणमुदकुम्भेनोपहत्याचैव¹ मैत्रावरु-
णाय दण्डं प्रयच्छेदिति ॥

73.11. राज्ञः प्रत्यानहन इति ॥ अन्तर्लोम्ना चर्मणा प्रत्यानह्ये-
दिति बौधायन ॥ ऊर्ध्वग्रीवेण बहिर्लोम्नेति शालीकिः ॥

73.21. ईषाया अन्वारम्भ इति ॥ सूत्रं बौधायनश्चानन्वारभ्यैवेषां
प्रत्यङ् द्रवन्मन्त्रं जपेदिति शालीकिः ॥

74.2. राज्ञः परिवहण इति ॥ प्रदक्षिणं परिवहेदिति बौधा-
यनो ॥ यथोपपादमिति शालीकिः ॥

74.7. राज्ञः प्रत्युपस्थान इति ॥ स ह स्माह बौधायनो मौद्-
भिद्यारणीभ्यां च राजामन्द्या च राजानं प्रत्युपतिष्ठेतेत्यथो ह
स्माह शालीकिरजेन च कर्णगृहीतेनोल्मुकेन² च राजामन्द्या
च राजानं प्रत्युपतिष्ठेत सो ऽग्नीषोमीयः पशुः स्यास्योहः³
स्यात्तूपरः स्यात्षण्डः स्याच्छ्यामुष्कास्स्यात्पीवान्स्यादिति⁴ विज्ञा-
यते ॥ १२ ॥

१ सोमक्रयणम् instead of सोमविक्रयिणम् G (sec. m.), सोमक्रयिणम् U D H C.—°भेनोपहत्या° Bu G (sec. m.), °भेनोपप्रहत्या° C D H (sec. m.), °भेनोमहत्या H (pr. m.).

२ °हीतेन सोमहीन U D H C; °हीतेन सोल्मकेन G.

३ स्योहः Bu G and the vivarana, स्योमः H D U C.

४ श्यामुष्काम् G Bu, viv., fails in H U; D Be are defective.—पीवाम् Bu U (pr. m.), viv.; पीवषाम् Be U (sec. m.); पीवषा H; D C defective; fails in G (sec. m., first hand invisible). N. B. nomin. पीवाम् as Mahâbh., not पीवा।

आतिथ्यस्य बर्हिषः संस्कार इति ॥ अभिदादानप्रभृतीन्यन्वाधायेदिति बौधायनः " स्रुवप्रभृतीनिति शालीकिः " संभरणप्रभृतीनित्यौपमन्यवः ' ॥

I. 174. 12. आतिथ्यस्य निर्वपण इति ॥ सूत्रं शालीकेर्"चो ह स्माह बौधायन उभौ विसृज्य राजानं प्रपाद्यातिथ्यं निर्वपेदिति ' ॥

I. 175. 14. राज्ञः परिचर्याया इति ॥ सूत्रं शालीकेर्"चो ह स्माह बौधायन ऋचैव राजानं परिचरेद्दूर्वार्थमुपनिरुद्धौषादिति ' ॥

I. 175. 17. अर्हण इति ॥ यथागतमर्हयेदिति बौधायनो " राजानमर्हयित्वर्त्विजो[1] ऽर्हयेदिति शालीकिः ' ॥

I. 175. 19. आतिथ्यस्य करण इति ॥ पुरोडाशस्य गोश्च स्यातामिति बौधायनः " पुरोडाश एवेति शालीकिः ' ॥

I. 176. 10. आज्यग्रहाणां ग्रहण इति ॥ चतुर्गृहीतानि वा पञ्चगृहीतानि वा स्युरिति बौधायनः " पञ्चगृहीतान्येवेति शालीकिः ' ॥

I. 176. 18. आतिथ्यस्यासादन इति ॥ चतुर्होत्रासादयेदिति बौधायनस्"तूष्णीमिति शालीकिः ' ॥

I. 176. 19. आतिथ्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः ' ॥

I. 177. 10. तानूनप्त्रस्य भक्षण इति ॥ सूत्रं शालीकेर्"चो ह स्माह

---

१ यथागत॰ instead of राजान॰ G U, C-D and H are defective.

बौधायनो निगुह्यैवैनं[1] निधापयित्वा व्रतकाले व्रतेन सह भक्षयेदिति[1] ॥

78 19. औपसदस्य बर्हिषः संस्कार इति ॥ अग्निदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः[11] शुल्बप्रभृतीनिति शालीकिः[11] संभरणप्रभृतीनित्यौपमन्यवः[1] ॥

6 उपसदां मन्त्रागम इति ॥ मन्त्रवत्यः स्युरिति बौधायनस्[11]तूष्णीका इति शालीकिर्[11]यत्पर्याण्यं[2] तत्तूष्णीकं[2] स्यादथेतरन्मन्त्रवत्स्यादित्यौपमन्यवः[2][11] सर्वमेवैतत्कर्माहिता कुर्यादित्यौपमन्यवीपुत्रः[1] ॥

26. आहुतीनां होम इति ॥ सूत्रं बौधायनस्य[11] प्राचीरेवैता आहुतीः संस्थापयेदिति शालीकिः[1] ॥

18 उपसदां[2] होम इति ॥ सूत्रं बौधायनस्यानत्याक्रम्यैवोपसदो[3] जुहुयादिति शालीकिः[1] ॥

सुत्यां परिशायन इति ॥ अहोरात्रं परिशयीरन्निति बौधायनो[11] ऽहरेवेति शालीकिः[11] कर्मणःकर्मणः प्रयुञ्जीतेत्यौपमन्यवः[1] ॥ १५ ॥ पञ्चमः ॥

---

१ निगुह्य॰ Ba G and U (sec m ), the viv , नुगुह्य॰ Be U (pr m.) G (pr. m ) H D C.

२ Thus G (sec m ) only, the vivarana of the text proper, and Keś (पर्याण्यम् = प्रधानम् Viv ). All the other MSS are more or less corrupt.

३ Thus Ba H G D C; ॰सदो Bo U.

४ Thus Ba H U G (pr m ) D C; ॰सदां G (sec. m.), ॰सदं Be

I, 182, 13. स्तम्बयजुषो हरण इति ॥ सूत्रं बौधायनस्यौपरवकाला-
द्ध्याग्नीध्रो हरेदिति शालीकिः ' ॥

I, 183, 1; III 57, 4. आख्यातं चात्वालस्य परिलेखनम् ॥

III, 57, 7. आख्यातं लोकाग्नीनाꣳ हरणम् ॥

I, 215, 5 (?) स्फ्यविघनानामुपस्थान इति ॥ सूत्रꣳ शालीकेर्वो ह
स्माह बौधायनो ऽग्निवत्युत्तरं परिग्राहं परिगृह्य योयुपित्वा
तिर्यञ्चꣳ स्फ्यꣳ स्तब्ध्वा यजमानमुत्करे स्फ्यविघनानुपस्था-
पयेदिति ' ॥

अग्नीषोमीयस्य बर्हिषः सꣳस्कार इति ॥ अभिदादान-
प्रभृतीन्मन्त्रान्साधयेदिति बौधायनः '' शुन्धप्रभृतीनिति
शालीकिः '' संभरणप्रभृतीनित्यौपमन्यवः ' ॥

अग्नीषोमीयस्य पशोरनुसंव्रज्याया इति ॥ अनुसंव्रजेदिति
बौधायनो '' नानुसंव्रजेदिति शालीकिः ' ॥

83, 18 इध्माबर्हिषोरुपसादन[1] इति ॥ सूत्रमाचार्ययोर्वो ह
स्माहौपमन्यवो ऽध्वैवास्मा आग्नीध्राय इध्माबर्हिराहरेत्तदादाय
प्राडित्यात्कुम्भहस्तश्च[2] पृष्ठ्याकालं प्राङ् स्रुवमाणगच्छेदिति[3] ' ॥

---

[1] ॰इपकस्पन the vivarana.

[2] Thus G (sec. m.) Be; प्रदीयात्कुम॰ Bu· प्राडियात्कुम॰ C'; प्राडित्यात्कुम॰ U G (pr. m ); प्राडित्याकु॰ H; प्राडेत्यकुम॰ D C.

[3] Thus G C U C'; मोनमाके॰ Bu; स्तपनाके॰ H; स्तुपनामके॰ Be स्तुर्वनागके॰ D.



4, 3. हविर्धानयोरभ्यावर्तन[१] इति ॥ काष्ठानि वा तृणानि वान्तर्धायाभ्यावर्तयेदिति[१] बौधायनो ″ ऽनन्तर्धायैवेति[२] शालीकिः ′ ॥

31 4. हविर्धानयोः प्रोक्षण इति ॥ तूष्णीं संस्कृताभिरद्भिः प्रोक्षेदिति बौधायनः ″ कमण्डलुभिरिति[३] शालीकिः ′ ॥

4 13. वर्त्मनोरभिक्षोम इति ॥ सूत्रमौपमन्यवीपुत्रस्यो ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य वर्तनिमभिजुहुया-त्सर्वा[४] अक्षधुर उपाञ्ज्यात्सर्वतश्च परिस्तृणीयादित्यो″ ह स्माह शालीकिः सर्वा एव वर्तनीरभिजुहुयात्सर्वा अक्षधुर उपाञ्ज्यात्सर्वतश्च परिस्तृणीयादिति ′ ॥

35, 16. मेथ्योर्निहनन इति ॥ स ह स्माह बौधायनो दक्षिणस्य हविर्धानस्य दक्षिणतो मेथीं निहन्यादुत्तरस्य दक्षिणत इति″ दक्षिणतश्चोत्तरतश्चेति शालीकि″र्मध्य इत्यौपमन्यवः ′ ॥

36, 10 दामाह्नां परिधीवण[५] इति ॥ सर्वान्दामान्दाम्नाम्यन्तेण परिधीव्येदिति बौधायनः ″ पूर्वौपूर्वाविति शालीकि″र्दक्षिणोदक्षिणाविद्यौपमन्यवः ′ ॥ १४ ॥

---

१ •भ्यवर्तये• G (sec. m.) and the vivarana, this might, after all, be the correct reading also VI. 24: 184, 3. (अभ्यवर्तयन्ति)

२ Thus G (sec. m.) C', मान्तर्धा• the other MSS.

३ कमंडलुभि• G (sec m.), cp Pāṇ. IV, 1, 71.

४ Emended; वर्तन्यामभि• H Be G U D C', वर्तन्या अभि Bu.

५ Thus C D H G (pr. m.), •विवाय Be C'; •व्ययम Bu G (sec m.) and the vivaraṇa.

I. 189. 1. औदुम्बर्या अभिहोम इति ॥ सूत्रमौपमन्यवीपुत्रस्यौत्रो ह स्माह बौधायन एवमेव जुहुदन्तर्धाय[1] हिरण्यमभिजुहुया-दित्युभयोरेव विशाखयोर्हिरण्ये[2] निधायाभिजुहुयादिति शालीकिः ' ॥

I. 197 8. वसतीवरीणां ग्रहण इति ॥ सूत्रं शालीकेर्'' नो ह स्माह बौधायन उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादिति[3] '' धिष्ण्याश्रुष वसतीवरीर्गृह्णीयादित्यौपमन्यवः ' ॥

I. 190. 18. उपरवाणां परिलेखन इति ॥ त्रिस्त्रिरेकैकं परिलिखे-दिति बौधायनः '' सकृत्सकृदिति शालीकिः ' ॥

I. 191. 7. उपरवपांसूनां हरण इति ॥ सूत्रं शालीकेर्'' नो ह स्माह बौधायनो यजमानस्याधस्तादुपोपोत्करं ह्लोप-सृप्तेदिति[4] ' ॥

I. 192. 1. उपरवाणां प्रोक्षण इति ॥ त्रिस्त्रिरेकैकं प्रोक्षेदिति बौधायनः '' सकृत्सकृदिति शालीकिस्तस्मिन्नपो ऽवनयेत्तस्मि-न्नवानप्रस्कन्दयेदित्येवमेवैनत्त्रिविधं कर्म कुर्यादित्यौपमन्यवः '' सर्वमेवैतत्कर्मावृता कुर्यादित्यौपमन्यवीपुत्रः ' ॥

---

१ ॰दन्तर्धाय G (sec m.), rightly?

२ Thus Bu G, the viv. and Keś, ॰ण्यं Be H U D C C'.

३ ॰ाभिरेवाप्या॰ G (sec m.).

४ Thus Bu C' U C D G (sec. m ), ह्लो॰ H; ह्लो॰ Be

4.14 धिष्णियानां निवपन इति ॥ स ह स्माह बौधायनो वेद्यन्त आग्नीध्रीयं निवपेद्वेद्यन्ते मार्जालीयं' धिष्णियाञ्च्युपोदीचीनमङ्ख्यतां[1] कुर्यादित्य''थो[1] ह स्माह शालीकिरन्तर्वेद्याग्नीध्रीयं निवपेदन्तर्वेदि मार्जालीयं' धिष्णियाञ्च्युप[1]न[2]पोदीचीनमङ्ख्यतां[2] कुर्यादिति' ॥

4.10. वेद्यै स्तरण इति ॥ सूत्रम् शालीकेर''थो ह स्माह बौधायनस्त्रयो दक्षिणतस्त्रय उत्तरतो मध्ये सप्तमः पृष्ठ्याकालं[3] प्राञ्च स्तृणन्तो गच्छेयुरिति'' पुरस्तादेवैनां प्रत्यञ्च स्तृणन्तो ऽभ्यवक्रामेयुरित्यौपमन्यवः' ॥

4.11.१. अग्नीषोमीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य'' पत्नीशाल एवाग्नीषोमीयस्याज्यानि गृहीत्वा-न्तानि खरे सादयेदिति शालिकिः' ॥

4.13. समन्वानयन इति ॥ सूत्रं बौधायनस्य'' नाद्रियेतेति शालीकिः' ॥

---

१ Thus here and l. 5 G (sec m.), •संख्यां Be C', •संख्यितां Bu •संख्यितान्कुर्या• U H D C G (pr m.) —Instead of धिष्णियान् H U D here and l 4 धिष्णियं।

२ Thus C D C' G (sec. m.) Bu, न्युप्यानथोदीचीनसं• Be, न्युप्योदीचीनसं• H.

३ Between पृष्ठ्या and कालं Bu G and U (sec. m) ins. •स्तरण•, Be C D C' Keś. omit the word; in H this dvandham is missing.—•कालं U G D Keś. and cp XXI. 14 · 94, 16, •काले Bu C', काले Be.

I. 194. 4. अर्धस्तनव्रतप्रदान इति ॥ समन्वानीय[1] वासमन्वानीय[1] वा[1] पुराणगार्हपत्यमर्धस्तनव्रतं प्रयच्छेदिति बौधायनो " नार्धस्तनव्रतं प्रयच्छेदिति शालीकिः ' ॥

I. 195. 1. वैसर्जनानाꣳ होम[2] इति ॥ सूत्रं बौधायनस्य " चत्वारि चतुर्गृहीतानि जुहुयादिति शालीकिः ' ॥

I. 195. 7. वसतीवरीणामनुसꣳहरण इति ॥ अनुसꣳहरेदिति बौधायनो " नानुसꣳहरेदिति शालीकिः ' ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

हृदयशूलानामुदासन इति ॥ एकैकश उदासयेदिति बौधायनः " सर्वान्सहेति शालीकिः ' ॥

I. 198. 3. वसतीवरीणां परिहरण इति ॥ सूत्रꣳ शालीकेर्"यो ह स्माह बौधायन एवमेवैनाः परिहरन्नग्रेण यूपꣳ सादयित्वा जघनेन गार्हपत्यमुपसाद्याग्नीधे सत्वा अभिप्रस्वपन्ती जाग्रतेति ' ॥ १५ ॥ षष्ठः ॥

I. 200. 5. सवनीयस्याज्यानां ग्रहणे सादन इति ॥ सूत्रं बौधायनस्याग्नीध्रे[3] एव सवनीयस्याज्यानि गृहीत्वा तानि खरे सादयेदिति शालीकिः ' ॥

---

१ In some of the MSS. समन्वानीयवा is found once only, but cf. the vivarana · समन्वारभमाणाप्पूर्वं वा ।

२ परिहोम H Bu D C U G (pr. m.), without परि Be G (sec. m.) and the vivarana, C' · वेदसंमार्जनानां होम ।

३ ॰ग्नीध्रीय U, ॰ग्नीध्रीये D C (omitting एव )

00, 17. औदुम्बराणां महापरिधीनां परिधान इति ॥ सूत्रमाचार्ययोर्''नो ह स्माहौपमन्यवः स्रुग्दण्डा एवैते स्युरिति' ॥

201 4. राज्ञ उपावहरण इति ॥ सूत्रमाचार्ययोर्''नो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानमुपावहरेदिति' ॥

201, 7. पञ्चहोतुर्होम इति ॥ सूत्रं बौधायनस्य'' चतुर्होतारꣳ हुत्वा पञ्चहोतारं जुहुयादिति शालीकिः' ॥

01, 10. प्रातरनुवाकस्योपाकरण इति ॥ सूत्रमाचार्ययोर्''नो ह [1]स्माहार्तभागीपुत्रस्तूष्णीकेनैककपालेन[2] प्रातरनुवाकमुपाकुर्यादिति' ॥

01 16 सवनीयानां निर्वपण इति ॥ सूत्रमाचार्ययोर्''नो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेदिति' ॥

01 17. तेषां व्रीहिष्वेव हविष्कृतमुद्वादयत्युपोद्यच्छन्ते यवानिति ॥ सूत्रꣳ शालीकेर्''नो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[3] स्यादिति' ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनये-

---

१ •संभागिपुत्र• G (sec. m.).

२ Thus Bu G (sec. m.) the vivaraṇa, •तूष्णीमेकेनै• C H U D G (pr. m.); •तूष्णीमेककपा• Be C'.

३ हविष्कृत् G U; हविष्कृत् D H C: हविष्कृत Bu; हविष्कृतं Be C', cp. XXI. 4: 75. 7; XXII. 11.

दिति बौधायनो " ऽग्रेणाग्निहायेति शालीकिरग्रेण वा जघनेन वेत्यौपमन्यवः ' ॥

I. 202. 1 पात्राणां सादन इति ॥ सूत्रं शालीकेर्" नो ह स्माह बौधायनः खरे पात्राणि सादयेत्तेषां यथार्थमाददीतेति ' ॥

I. 203. 9 अथैकधनान्गृह्णातीन्द्राय वो जुष्टान्गृह्णामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥ १६ ॥

I. 203. 14 अंशोः प्रस्कन्दन इति ॥ होतृचमसादंशुं प्रस्कन्दयेदिति बौधायनो " वासतीवरात्कलशादिति[1] शालीकिः ' ॥

I. 203. 21 क्रतुकरण इति ॥ सूत्रं बौधायनस्य " यथाक्लृप्तेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ' ॥

I. 204. 8. दधिग्रहस्य ग्रहण इति ॥ सूत्रं शालीकेर्" नो ह स्माह बौधायन औदुम्बरेणैनं पात्रेण गृह्णीयाद्धुत्वा चैतत्पात्रमन्वेवानुप्रहरेदिति ' ॥

I. 205. 2. दक्षिणायै दान इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

I. 205. 7 तासु निग्राभ्यासु यजमानं वाचयतीति ॥ सूत्रं शालीकेर्" नो ह स्माह बौधायन ऊरौ वोरसि वोपनिगृह्य तासु निग्राभ्यासु यजमानं वाचयतीति ' ॥

I. 205. 17. राज्ञो निर्वपण इति ॥ सूत्रमाचार्ययोर्" नो ह स्माहौपमन्यवः प्रातःसवन एव सर्वेभ्यः सवनेभ्यो राजानं निर्वपेदिति ' ॥

---

१ Thus Bu G H; ०तीवरीकलशा० Be C'; ०तीवरीक U.

206 11 सो ऽंशौ स्कन्ने वाचयतीति ॥ सूत्रं बौधायनस्योपांशावेवांशौ स्कन्ने वाचयेदिति शालीकिः' ॥

208 16 उपांश्वन्तर्यामयोर्होम इति ॥ सूत्रं बौधायनस्योभावेवोदिते जुहुयादिति शालीकिरुभावेवानुदिते जुहुयादित्यौपमन्यवः ॥

07 11; 09 8 आग्रयणस्य ग्रहण इति ॥ सूत्रं शालीकेर्"यो ह स्माह बौधायनो द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने चतसृणां तृतीयसवन इति' ॥

211, 18. द्रप्सानुमन्त्रणीयास्विति ॥ सूत्रं बौधायनस्य" स्रुवाहुतीरेवैता[१] जुहुयादिति शालीकिः' ॥ १७ ॥

212 4. पवमानग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य" मनुष्यान्परिमृज्य सादयेदिति शालीकिः' ॥

212 13. संततीनां[२]होम इति ॥ सूत्रं शालीकेर्"यो ह स्माह बौधायनो वसतीवरीरप्येतैर्मन्त्रैरवनयेदिति' ॥

212 8 पवमानानामुपाकरण इति ॥ सूत्रं बौधायनस्य" सदस एव बर्हिषी आदायोपाकुर्यादिति शालीकिः' ॥

212 14 ब्रह्मण उपवेशन इति ॥ यथा सदस्येवमुपविशेदिति बौधायनो" यथा दर्शपूर्णमासयोरेवमिति शालीकिः' ॥

---

१ Thus, and cp XXV. 18, H D C U G, °रेवैता Bu, °वैता Be C'.

२ Thus (with न) G (sec. m.) U; संततीनां the other MSS., cp XXV 18

I. 212. 14. यजमानस्योपवेशन इति॥ यथा सदस्येवमुपविशेदिति बौधायनो" यथा दर्शपूर्णमासयोरेवमिति शालीकिः'॥

I 212 19 अथोद्गात्रे वा प्रस्तोत्रे वा बर्हिषी प्रयच्छतीति॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः'॥

I. 212 19 ऋक्सामयोरुपस्तरणमसि मिथुनस्य प्रजात्या इति वा तूष्णीं वेति। पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य॥

I. 213 5 पञ्चम्यां प्रस्तुतायां वाचयतीति॥ सूत्रं बौधायनस्य" यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः'॥

I 213 16 सप्तहोतुर्होम इति॥ सूत्रं बौधायनस्यानुसवनमेव सप्तहोतारं जुहुयादिति शालीकिः'॥

I 213 19. धिष्णियानां विहरण इति॥ स ह स्माह बौधायन आग्नीध्रीयादङ्गारानादाय[१] तत आग्नीध्रीये प्रस्कन्दयेदथानुपूर्वमितरेषु' धिष्णियान्विहृत्योदीचीनसङ्ख्यतां[२] कुर्यादित्य"थो ह स्माह शालीकिराग्नीध्रीयादङ्गारानादाय तत आग्नीध्रीये प्रस्कन्दयेदथानुपूर्वमितरेषु' धिष्णियान्विहृत्य न चोदीचीनसङ्ख्यतां[२] कुर्यादिति'॥

---

१ ०ग्नीध्र० and ०ग्नीध्रीय० the MSS promiscue; the vitarana and Keś always ०ग्नीध्रीय०।

२ Thus G D C U (pr. m) ०संख्यतान् U (sec m.), ०सख्यता H; ०संख्यां Bu; Be C' defective

३ Thus U (sec m.) D C C', ०संस्थानं G (sec. m); ०संस्थानं Bu, संख्यानं H Be U (pr. m) G (pr. m.).

94. 1. धिष्णियानां व्याघारण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

स्वरुशकलस्योत्पादन इति ॥ यूपः स्वरुशकलमुत्पादयेदिति बौधायनः " पशुरिति शालीकिस्तन्त्रमित्यौपमन्यवो " देवतेत्यौपमन्यवीपुत्रः ' ॥ १८ ॥ सप्तमः ॥

5 16 सर्पण इति ॥ सूत्रं बौधायनस्यौपदारिक[१] एव यजमानः स्यादिति शालीकिः ' ॥

तार्तीयसवनिकेषूक्थ्यविग्रहेष्विति ॥ स ह स्माह बौधायनः प्रसर्पेदेव तार्तीयसवनिकेभ्य उक्थ्यविग्रहेभ्यः षोडशिने[२] रात्रिपर्यायेभ्यो राथंतराय संधय इत्यथो ह स्माह शालीकिस्तृतीयसवनातिष्ठद्भिरेवैषा[३] भवति ' यदेव तृतीयसवने प्रसर्पेत्तत्प्रसृप्तमेव[४] तेषां[४] स्यादिति " प्रातःसवन एव सर्वेभ्यः सवनेभ्यः संप्रसर्पेदित्यौपमन्यवः ' ॥

7 13. आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यात्सर्वाणि च सवनान्यनुप्रसिञ्चेदिति[५] बौधायनस्तूष्णीका च स्यात्-

---

१ °पराहारि° U D C H Be C'; cp XXI. 9 86. 7

२ °शिने G Be; °शिनि Bu H U C D C'

३ °नातिष्टद्भि° Be G (*sec. m.*), °नांसष्टद्भि° C D U, °नंसष्टद्भि° H G (pr. m.); नाभिष्टद्भि° Bu C' and the vivarana

४ °मेवैतेषु G (sec m.), °मेषां H.

५ °नुसमीया° MSS

वींषि च सवनान्यनुषमियादिति[१] शालीकि"र्मन्त्रवती च स्यात्प्रातःसवने चैवैषा स्यादित्यौपमन्यवः ' ॥

I. 217. 11. सवनीयानासुदासन इति ॥ सूत्रं बौधायनस्य " नाना-पात्रेष्वेव[२] सवनीयानुद्दासयेदिति शालीकिः ' ॥

I. 217. 16. प्रातः प्रातःप्रावत्येति ॥ सूत्रं बौधायनस्य " प्रातःप्रावत्येत्येव ब्रूयादिति शालीकिः ' ॥

सवनीयानामनुसंहरण इति ॥ अनुसंहरेदिति बौधायनो " नानुसंहरेदिति शालीकिः ' ॥

I. 218. 8. प्रतिनिर्ग्राह्याणां[३] ग्रहण इति ॥ सूत्रं बौधायनस्य " द्विदेवत्येभ्य एव प्रतिनिर्ग्राह्यान्निगृह्णीयादिति[४] शालीकिः ' ॥

I. 218. 13. आघार इति ॥ सूत्रं बौधायनस्य " यज्ञादेवैनमाघार-माघारयेदिति शालीकिर्द्रोणकलशात्परिप्लुना पात्रेणेत्यौप-मन्यवो " यजुरेवैतज्जपेनैतमाघारमाघारयेदित्यात्रेयगविः[५] ' ॥

---

१ •नुषमीया• MSS

२ Thus Be C' and the viv., •पात्रेषु Bu G U D C Keś ; •पात्रेष्वेव H

३ •निर्ग्रा Be C' H U D C G (pr. m.); निग्रा• Bu G (sec. m.) and the vivarana

४ निर्ग्राह्यानिगृह्णी• G (sec. m.) but the r effaced, Be H C D U •निग्राह्यांनिगृह्णी• Bu , •नर्ग्राह्यानिगृह्णी• C'; •निग्राह्यानिगृह्णी• Keś ; read probably (with Keś.) •निर्ग्राह्यान्गृह्णीयादिति ।

५ Thus G (sec. m.), •मैवमाघार• Be H U C D; •मेनमाघारये• C •मैनमाघारये• G (pr. m.) Keś.; •रेवदेवैनमाघारमा• Bu.

220. 9 मङ्स्रावस्यापिधान इति ॥ सूत्रं बौधायनस्य " यावानेव[1] मङ्स्रावः स्यात्तमपिदध्यादिति शालीकिः ' ॥

220 14 चमसानामायातन[2] इति ॥ अग्रेण स्रुचः[3] प्राच[3] आयातयेदिति बौधायनो " जघनेन स्रुच उदीच आयातयेदिति शालीकिः ' ॥ १९ ॥

221. 4 ग्रहयोः संधान इति ॥ अरत्नी च ग्रहौ च संदध्यातामिति बौधायनो " ग्रहावेवेति शालीकिः ' ॥

22 12 शुक्रवतो मन्थिवत इति ॥ सूत्रं बौधायनस्य " मन्थिवत इत्येव ब्रूयादिति शालीकिः ' ॥

22 20. मन्थिमङ्स्रावस्य होम इति ॥ सूत्रङ् शालीकेर्"नो ह स्माह बौधायन आहवनीयादेवोदीचो ऽङ्गारान्निर्वर्त्य तेषु मन्थिनः[4] मङ्स्राव[4] जुहुयादिति ' ॥

होत्रकचमसानाङ्[5] होम इति ॥ स ह स्माह बौधायनः शुक्रामन्थिभ्यामेनान्सह सकृज्जुहुयाद्द्विरभ्युन्नीतानित्य्"नो ह स्माह शालीकिर्नैनाञ्छुक्रामन्थिभ्याङ् सह सकृज्जुहुयाद्द्विरेवाभ्युन्नीतानिति ' ॥

---

१ यावानय U D C, यावानेच Be; यावानय H

२ °मायमन MSS. and the vivarana.

३ Thus G (see m.) Bu; स्रुच उदीच H U C, स्रुच only, Be D C′.

४ संथिसंत्रा° G (see m.)

५ Thus G (see m.) and C′ only; होत्रचमसानां the other MSS. and the vivarana.

I. 223 17 द्विदेवत्यानां भक्षण इति ॥ सूत्रं बौधायनस्य " प्राणेपूपनिग्राहं द्विदेवत्यान्भक्षयेदिति शालीकि"र्दीर्घभक्षेणैवैनान्भक्षयेदित्यौपमन्यवः[१] ' ॥

I. 224 7. अथैतानि द्विदेवत्यपात्राण्यरिक्तानि करोतीति ॥ सूत्रं बौधायनस्य " सोमेनैवैतान्यरिक्तानि स्युरिति शालीकिः ' ॥

I. 224 10 अथैनानि दक्षिणस्य हविर्धानस्योत्तरस्यां वर्तन्यां सादयतीति ॥ सूत्रं बौधायनस्याधस्तादेवैनान्युपहृत्य[२] सादयेदिति[२] शालीकिः ' ॥

वाचि वाचं दधामीति[३] वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

होत्रकचमसानां प्रतिभक्षण इति ॥ प्रतिभक्षयेदिति बौधायनो " न प्रतिभक्षयेदिति शालीकिः ' ॥

I. 229. 6. प्रत्यभिमर्शन इति ॥ सूत्रः शालीकेर"थो ह स्माह बौधायनो भक्षयन्नेव[४] भक्षाणां पारे प्रत्यभिमृशतीति ' ॥

---

१ दीर्घभक्षेणै॰ MSS, only C' भक्षणैवैना॰, cp XXV. 20

२ *Uncertain*, ॰न्युपहृत्यासाद॰ G (sec m), *all the other* MSS. ॰न्युपहृत्य आसाद॰ The vivarana· अधस्तादेव दक्षिणस्योपहृत्यस्य द्रोणकलशसमीपे; *could* उपहृत्यस्य *be the correct reading?*

३ Thus Bu C D G U C'; ददामीति H Be. In the text proper no vikalpa of the kind here mentioned, is found; neither is the yajus to be traced in any text. Perhaps this dvaidham is to be taken together with the foregoing one

४ Thus G (sec m) and the vivarana, भक्षंनेव Bu; भक्षयेन्नेव H Be U D G (pr. m) C C'.

233 1. ऐन्द्राग्नस्य ग्रहण इति ॥ सूत्रमाचार्ययोर्" नो ह स्माह दीर्घवाक्सो सुखेनैनं पात्रेण गृह्णीयादिति ' ॥

220 1 नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो " नानुप्रकम्पयेरन्निति शालीकिर्" नैनानुपोपच्छेरंश्चनेत्यौपमन्यवः ' ॥ २० ॥ अष्टमः ॥

4 13. माध्यंदिनीये ऽभिषव इति ॥ नवकृत्वोनवकृत्वो ऽभिषुत्य निग्राभमुपेयुरिति बौधायनो " ऽपरिमितमिति शालीकिः ' ॥[1]

35. 9 मरुत्वतीययोर्ग्रहण इति ॥ सूत्रं शालीकेर्" नो ह स्माह बौधायन उपरिष्टादेवाग्रयणाद्गृह्णीयादिति ' याज्ञलोको ह्येष भवतीति ' ॥

6. 10. अष्टम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य " यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ' ॥

37 3 दधिघर्मस्य ग्रहण इति ॥ सूत्रं बौधायनस्याग्नीध्र एवं गृह्णीयादिति शालीकिः " परिश्रित्योभयतः शान्तिं कृत्वाग्नीध्र एवेत्यौपमन्यवः ' ॥

दधिघर्मस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः ' ॥

. 16. दधिघर्मस्य भक्षण इति ॥ सूत्रं शालीकेर्" नो ह स्माह

---

१ After this dvaidham G U D H C ins प्रातःसवन एवैषा स्यादित्यौपमन्यवः सवनीयासुद्रामन इति सूत्रं बौ॰ स्य नानापात्रेष्वेव सवनीयानुद्रामयेदिति शा॰ किः । cp. XXI. 19 : 104 3.

बौधायनो ऽवभृथभक्षणेनैवेतरे भक्षयेयुर्यजमान एव प्रत्यक्षं भक्षयेदरण्ये[1] ऽनुवाक्येन[1] मन्त्रेणेति[1] ॥

240 20 दक्षिणानामत्याकरण[2] इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायन एकामेव दक्षिणां दक्षिणापथेनात्याकुर्यादथे तरा[3] यथावकाशं गच्छेयुरिति[1] ॥

संचर[4] इति ॥ नीतासु दक्षिणासु[5] यथार्थं संचरेरन्निति बौधायनो[11] नामं स्थिते सोमे ऽध्वर्युः प्रत्यङ् मदो ऽतीयादिति शालीकिः[1] ॥

I 259 7 कृष्णविषाणाया: प्राशन इति ॥ सूत्रं बौधायनस्य[11] नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्येदिति शालीकिः[1] ॥

I 241 9 आत्रेयस्य संवदन[6] इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनस्त्रिरेवात्यतिप्रजन्पृच्छेत्[7] आत्रेयः क आत्रेय इति[1] ॥ २१ ॥

---

१ Thus G U (pr. m.), viv, Keś; ॰क्षेनानुवा॰ Be U (sec. m.); ॰क्षेनवा॰ Bu H D C, ॰क्षेवानुवा॰ C'

२ Thus Be C' Bu and the vivaraṇa (one copy) ॰त्याकमण U H G D C and the vivarana (another copy).

३ ॰कुर्याद॰ Be Bu C'; ॰क्रामयेद॰ U H G D C.

४ संचरण Bu.

५ Between दक्षिणासु and यथार्थं the MSS. exc. Be C' and Keś; ins. चात्वाले, clearly interpolated from the following dvaidham

६ Thus Bu C' G (sec. m.), the vivaraṇa; संवादन Be H C U D G (pr. m.).

७ Thus Bu Be G C'; त्रिरेवात्यति॰ H U D C

4 13 दक्षिणानां दान इति ॥ स ह स्माह बौधायनो महर्त्विग्भ्य एना[१] दद्यान्न होत्रकाननुसंचरेरन्निति " न च होत्रकाननुसंचरेरन्न च यदस्याय दद्यान्न ह्येतस्यानुख्या विज्ञायत इति शालीकिः ' ॥

12 8.4 मरुत्वतीययोर्होम इति ॥ स ह स्माह बौधायनो यसेवाध्वर्युर्जुहुयात्स वषट्कृतानुवषट्कृतः स्यादथेतरो ऽननुवषट्कृतः[२] स्यादित्यु' भावेवाननुवषट्कृतौ[३] स्यातामिति शालीकिरु"भावेवानुवषट्कृतौ स्यातामित्यौपमन्यवः ' ॥

2 13 तृतीयस्य मरुत्वतीयस्य ग्रहण इति ॥ सूत्रमाचार्ययोर"थो ह स्माह दीर्घवाक्यो मुख्येनैनं पात्रेण गृह्णीयादिति " ॥

13 5 नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो " नानुप्रकम्पयेरन्निति शालीकि"र्नैनानुपोद्यच्छेरञ्स्नेत्यौपमन्यवः ' ॥

44.2 सौम्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू"ष्णीक इति शालीकिः " सौम्य एव मन्त्रवान्स्यात्तूष्णीक एककपाल इत्यौपमन्यवः ' ॥

5 11 तार्तीयसवनिके ऽभिषव इति ॥ सूत्रं बौधायनस्य " यदाप्याययति तेनांशुमदित्येव ब्रूयादिति शालीकिः ' ॥

---

१ एना Bu G; एनां H Be C' U D C; एव the vivarana

२ Emended, नामुव॰ or मानव॰ MSS.

३ Thus Be C' U; ॰भावेवानु॰ H D C; ॰भावेव वषट्कृतानुवषट्कृतौ G (sec. m.).

I 245. 19 आदित्यग्रहस्य ग्रहण इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनः पुरस्तादेनमभिपवाद्गृह्णीयात्तूष्णीं[1] प्रतातञ्चामवनयेदिति ॥

I 246 12 आदित्यग्रहस्योदाहरण इति ॥ अर्धर्चेश उदाहन्यादिति बौधायन स्वर्चेति शालीकिः ॥

I. 247. 11. मैत्रावरुणस्य अयण[2] आशिरो[2] ऽवनयन[2] इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनः श्रीणीयादेव मैत्रावरुणं पयसाशिरमवनयेदिति ॥

I. 248 5. नवम्यां प्रस्तुतायां वाचयतीति ॥ सूत्रं बौधायनस्य यस्यामेव कस्यां चिद्वाचयेदिति शालीकिः ॥ ,

I. 249. 17, 250 6. होत्रकाणां[3] संतर्पण इति ॥ सूत्रं शालीकेर्नो ह स्माह बौधायनो ऽनुसवनमेव होत्राः[4] संतर्पयेदिति पञ्च प्रातःसवने षण्माध्यंदिने सवने सप्त तृतीयसवन इत्यौपमन्यवः ॥

I. 251. 1 औपासनेष्विति ॥ स ह स्माह बौधायनो ऽनुसंप्रज्यौपासनानामनुमन्त्रयेत चमसेभ्यश्च पुरोडाशशकलानुपास्येच्च देव

---

१ पुरस्तादेवाभि॰ G (sec. m.), पुरस्तादेवमभि॰ D C H

२ Emended; अयणाशिरोवनयन Bu G and the vivarana; अयणाशिरघोत्वनयन H U D C; अयणीशिरोवनयन Be C'.

३ होत्रकाणां Be G (sec. m ) C', the vivarana; होत्राणां Bu; होत्रणां G (pr. m.); होत्रणां H U D C

४ होत्राः Bu G (sec. m.); होत्रकान् Be C' H U D C G (pr. m ).

षड्ढोतारं व्याचक्षीतेत्यथो ह स्माह शालीकिरनुसंमन्त्र्यैवौपासनानतुमन्त्रयेत पार्श्वतस्समवेभ्यः[१] पुरोडाशशकलानुपास्येदुपरिष्टाच्च षड्ढोतारं व्याचक्षीतेति ' ॥ २२ ॥ नवमः ॥

I. 251 6 सावित्रस्य ग्रहणे सादन इति ॥ सूत्रं बौधायनस्य ' सजुष्टं परिमृज्य सादयेदिति शालीकिः ' ॥

2. 252. 5. तदन्यतो-मदं प्रतिगृणातीति ॥ सूत्रं बौधायनस्य " मदामोद[२] इवेत्येव[३] प्रतिगृणीयादिति शालीकिः ' ॥

252 11. नाराशंसानामनुप्रकम्पन इति ॥ अनुप्रकम्पयेरन्निति बौधायनो ' नानुप्रकम्पयेरन्निति शालीकिर्नैनानुपोद्यच्छेरंस्तनेत्यौपमन्यवः ' ॥

सौम्यस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन " उच्चैरिति शालीकिः ' ॥

I 253 5 सौम्यस्य परीज्याया इति ॥ स ह स्माह बौधायनो यदि चैव[१] समस्तौ यदि च विहृतावग्नाविष्णू उपांश्वेव स्यातामिति " समस्तावुपांशु विहृतावुच्चैरिति शालीकिः ' ॥

. 248. 12 तार्तीयसवनिकानां धिष्ण्यानां विहरण इति ॥ सूत्रं शालीकेरथो ह स्माह बौधायनस्त्वरित्वा वाचरित्वा वा सौम्येनाङ्गारैस्स्तुर्धिष्ण्यान्विहरेदिति ' ॥

---

१ पार्श्वतः om. Bo C'.

२ मोदिवेत्येव G (sec m) only

३ एव om. Be Bu D U (pr. m).

I. 254. 6. पात्नीवतस्य श्रयण इति ॥ सूत्रं बौधायनस्य" दध्ना वा पयसा वा पात्नीवतꣳ श्रीणीयादिति शालीकि"र्धिष्ण्यानां व्याघारणशेषेणाज्येन पात्नीवतꣳ श्रीणीयादित्यौपमन्यव:' ॥

I. 254. 14 पत्न्या उद्गानयन इति ॥ सूत्रं बौधायनस्यै"वामीतापो- हिष्ठीयाभ्य इति शालीकि:' ॥

I. 255. 14. तदुभयतो-मदं[1] प्रतिगृणातीति । सूत्रं बौधायनस्य" मोदा मोद[2] इवेत्येव[2] प्रतिगृणीयादिति शालीकि:' ॥

I. 255 17. ध्रुवस्य प्रच्यावन इति ॥ सूत्रं बौधायनस्य" सर्व एवैषो ऽवनयनमन्त्र: स्यादिति शालीकि:' ॥ २३ ॥

I. 256. 14. चमसानामायातन[3] इति ॥ पूर्व: कल्पो बौधायनस्योत्तर: शालीके: ॥

I. 256 15 तेषु चौꣳस्तौꣳश्च दूर्वाधन्योऽप्रास्यत्येकैकं च दर्भपुञ्जील- मिति ॥ सूत्रं बौधायनस्याङ्गिरेवैते दधा:[4] स्युरिति शालीकि:' ॥

I. 256. 21. औपयजेष्विति ॥ सूत्रꣳ शालीकेर"न्नो ह स्माह बौधा- यन आग्नीध्रादग्नीषोमीयस्य[5] च सवनीयस्य चाङ्गारानाहरे- च्छामित्राग्नेचावरुच्छे वशाया इति' ॥

---

[1] ॰मदं all, against VIII, 15 255. 14.

[2] मोदेवेत्य॰ G D C C'

[3] ॰मायतन all exc C

[4] ? दधा Bu C', दध्या: G (sec m.), दधा Be, H U D C omit the word altogether. The vivarana has: अङ्गिरेव माधवो दर्भमीय इति।

[5] Thus, and comp. vol. I l c., H G U (pr m) C D, the vivarana; ॰ग्नीषोमीया॰ Be C' U (sec m) Bu Ke

258. 8. मिन्दाहुत्योर्होम इति ॥ सूत्रमाचार्ययोर्" चो ह स्माहौपमन्यवः पुरस्तान्मिन्दाहुती जुहुयान्मिन्दाहुती हुत्वा हारियोजनं ग्रहं गृह्णीयादिति ' ॥

58. 10 शाकलैश्चर्याया इति ॥ सूत्रꣳ शालीकेर्" चो ह स्माह बौधायनो यावन्त्येनाꣳसि कृतान्यभिविजानीयात्तेषामवयजनमसीत्यभ्यादध्यादिति ' ॥

58. 15. आदित्यस्योपस्थान इति ॥ सूत्रं बौधायनस्याहवनीयमेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः ' ॥

259. 8 कृष्णविषाणायाः प्रासन इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

59. 12. अवभृथ इति ॥ सूत्रमाचार्ययोर्" चो ह स्माहौपमन्यवो ऽत्रैवैनꣳ[1] स्थण्डिले कुम्भमिश्रं प्ररोप्य स्थालीभिश्च ग्रावोवायव्येन चावभृथमवेयादिति ' ॥

61. 12 ग्रावोवायव्यस्य प्रप्लावन इति ॥ सूत्रं बौधायनस्य" प्रचाल्योदाहरेयुरिति शालीकिः ' ॥ प्रचाल्यैवैता स्थालीरुदाहरेयुस्ताश्चैतानि देविकाहवींꣳष्यपि अपयेयुरिति बौधायनः" प्रप्लावयेयुरेवेति[2] शालीकिः ' ॥ २४ ॥

कृष्णाजिनस्य प्रप्लावन इति ॥ सूत्रꣳ शालीकेर्" चो ह स्माह बौधायनः कृष्णाजिनमुन्मृष्याद्भिरभ्युक्ष्य पुनाय वान्ते-

---

१ चैवैतं Bu G D C, चैवैन H U (pr. m), चैवैतम् U (sec. m.), चैनत् Bo C'.

२ एव only in G (sec. m.).

वासिने वा दद्यात्स्रुचोपधानं[1] वैनत्कुर्वीतापि वैनेन पुनर्दीक्षेतापि वैनेन पुनर्यजेतेति ' ॥

I. 262. 6 उदयनीयस्य बर्हिषः संस्कार इति ॥ असिदादानप्रभृतीन्मन्त्रान्साधयेदिति बौधायनः " स्तुत्वप्रभृतीनिति शालीकिः " संभरणप्रभृतीनित्यौपमन्यवः ' ॥

ib. उदयनीयस्य निर्वपण इति ॥ स्रुचि वावधाय[2] चामकापङ् स्थाल्यां[3] वा सचामकापायां[4] निर्वपेदिति[4] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

I 262 9 उदयनीयस्य श्रपण इति ॥ पयसि श्रपयेदिति बौधायनो " ऽप्स्विति शालीकिः ' ॥

चरोरनुपरिहरण इति ॥ अनुपरिहरेदिति बौधायनो " नानुपरिहरेदिति शालीकिः ' ॥

उदयनीयस्यासादन इति ॥ षड्ढोत्रासादयेदिति बौधायनस्तूष्णीमिति शालीकिः ' ॥

उदयनीयस्य चर्यास इति ॥ सूत्रं बौधायनस्याहवनीय एवोदयनीयेन चरेदिति शालीकिः ' ॥

. 263. 2, 5. अनूबन्ध्यस्य[5] करण इति ॥ सूत्रं बौधायनस्य " मैत्रावरु-

---

१ स्रुचोपधानं all the MSS., स्रुचोप॰ Keś ; स्रुचां निधानार्थं स्रुचि॰ the vivarana

२ चामर्थाय H D G U C C'.

३ स्थाल्या G (sec m.) Bo C'.

४ ॰कापयेति G (sec m.) ; ॰कापयेदिति C'

५ अनू॰ G (sec. m ) C' and the vivarana, अनु॰ the other MSS

ण्यामित्रया[1] यजेतेति शालीकिर्" नो ह स्माहौपमन्यवो ऽजं[2] पशुमध्यत्रालभेतै' कादशप्रयाजं त्वेव तन्तत्रं संतिष्ठापयिषेदिति ' ॥

वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः " सर्वान्सहेति[3] शालीकिः ' ॥ २५ ॥

उत्तम[4] इति ॥ सर्वान्गोपशूनुत्तमयेदिति बौधायनो " ऽन्यत्रर्षभाच्च वशायै चेति शालीकिः ' ॥

I. 263 5,१० आमित्रायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तू" ष्णीकेति शालीकिः ' ॥

I 263 6 मैत्रावरुणे परिधिष्विति ॥ सूत्रं शालीकेर्" नो ह स्माह बौधायनः पूर्वे सूणे सदसो वा हविर्धानयोर्वा भित्त्वा वैदलकान्परिधीन्मैत्रावरुणे[5] कुर्यादिति ' ॥

---

१ वा ins G

२ ज Bu.

३ सर्वाणि instead of सर्वान् some of the MSS , some omit सह ।

४ Thus G (sec. m.) and the vivarana of our passage; उक्थ a copy of the vivarana of the text proper; उत्तम Bu, उत्करय Be C′ U (sec. m ), उत्तयग C D H U (pr. m ) G (pr. m.) and a copy of the vivarana of the text proper.

५ वै(बै)दलकान् all (and thus also the Karmānta, XXV 26), exc. G (sec. m ), which has वैदलान् ।

I. 263. 8 उद्वसान इति ॥ सूत्रं बौधायनस्य" पूर्णाहुत्यैवोद्वस्येदिति शालीकिः' ॥

I. 263. 12 दक्षिणायै दान इति ॥ सूत्रं बौधायनस्य" नाचाकामनियतं[1] देयमिति शालीकिः' ॥

I. 263. 13. देविकाहविषां करण इति ॥ सूत्रमौपमन्यवीपुत्रस्यौपो ह स्माह बौधायनस्त्रीण्यनूबन्ध्यस्य पशुपुरोडाशमनुवर्तेरन्स्तीण्युद्वसानीयामिति" सर्वाण्येवानूबन्ध्यस्य पशुपुरोडाशमनुवर्तेरन्निति शालीकिरौष्ट्येनैव देविका यजेतेत्याश्मौगविः' ॥

I 264. 5. अग्निभिः प्रत्यवमान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधायनो" ऽरण्योः समारोह्येति शालीकिः' ॥

I 264. 7. अग्निहोत्रयोः प्रतिहोम इति ॥ प्रतिजुहुयादिति बौधायनो" न प्रतिजुहुयादिति शालीकिर्न प्रतिजुहुयादिति शालीकिः[2]' ॥ २६ ॥ दशमः ॥

॥ इत्येकविंशः[3] प्रश्नः ॥

---

१ Uncertain reading; नाचाकाम्यतो G (sec. m.), नाचाकामन्वितं Be C' (but न्व corrected into व); नावकामनियतं U, नावकामनियतं H; नावकामनियतं D, नावकामनियतं C', नावकामनियति Bu The vivarana, although my copy of it is rather bad, seems at least to point to ‍॰कामः as it runs इमदोकामस्यानियतो नियमः।

२ The repetition of the finishing words not found in the MSS

३ On the praśna- number cp Preface to Vol. II, p. II.

1.1. अथातोऽग्निकल्पं व्याख्यास्यामः ॥

..11. खरस्य करण इति ॥ उत्तरपूर्वे ऽवान्तरदेशे कुर्यादिति बौधायन '' उत्तर एवेति शालीकिः ' ॥

1.20. सावित्राणाꣳ होम इति ॥ सूत्रं बौधायनस्य '' सम्दह्याप्य चतुर्गृहीतं जुहुयादिति शालीकिः ' ॥

.2.6. गर्दभरशनाया आदान इति ॥ मन्त्रेणाददीतेति बौधायनस्तूष्णीमिति शालीकिः ' ॥

I 9. वल्मीकवपायै निधाने वैश्वस्योपवेशन इति ॥ सूत्रꣳ शालीकेर्''यो ह स्माह बौधायनो वल्मीकवपां निदध्याच्च वैश्वमुपवेशयेद्यत्र खनिः[1] स्यात्तद्यच्छेदयस्तत्र पृच्छेत्तं प्रतिब्रूयादिति ' ॥

II.3.6 खनन इति ॥ अर्धर्चशः खनेदिति बौधायन '' ऋचर्चेति शालीकिः ' ॥

.3.10. पुष्करपर्णेनोत्तरदण्डेन सꣳसृणातीति ॥ सूत्रं बौधायनस्य '' यथोत्पन्नेनैव सꣳसृणीयादिति शालीकिः ' ॥

.3.14. पिण्डानाꣳ हरण इति ॥ सूत्रꣳ शालीकेर्''यो ह स्माह बौधायनः सर्वाभिःसर्वाभिश्चतुर्हरेदिति '' गायत्रीभिर्हरेत्त्रिष्टुभिः सादयेदित्यौपमन्यवः ' ॥

I.4.8. अश्वस्यात्यायमन इति ॥ सूत्रꣳ शालीकेर्''यो ह स्माह बौधायनस्तूष्णीमश्वमत्यायच्छेत्सर्व एवैष गर्दभमन्त्रः स्यादिति ' ॥

---

[1] खनि or खनी the MSS. खनि. भानिमा स्व the Mahāgnisarvasva.

II. 4. 12. द्यावापृथिव्योः समीक्षण इति ॥ उभे पद्धत्याँ समीक्षेतेति बौधायनस्त्रिरेवेति शालीकिः " प्राच्यां दिशि संधिमीक्षमाण एतं मन्त्रं जपेदित्यौपमन्यवः ' ॥

II. 4. 16. अपो ऽशने अभ्यवहरन्त्यपि वाद्भिरभ्युक्ष्य भुञ्जत इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥ १ ॥

II. 5. 11. उखानां करण इति ॥ स ह स्माह बौधायनो ऽषाढामप्येतस्यै याजुष्यै पादमात्रीं[1] कुर्याद्यावन्मात्रीं चादायेष्टकामृत्तिकायामपिसृजेदेवमस्य[2] सर्वो ऽग्निर्याजुषो भवतीत्येकामेवोखां मन्त्रेण कुर्यात्तूष्णीमितरे इति शालीकिः ' ॥

सर्वासु भित्तासु प्रत्यय इति ॥ स ह स्माह बौधायनः समाविद्धं मन्त्रकर्माभ्यावर्तयेदिति[3] ॥ यदन्यत्साविद्भ्य इति शालीकिः ' ॥

II 6. 4 अथाद्भ एकविंशतिं कृष्णो अश्वस्य शकृत्पिण्डानभिमग्निं पचनमिति ॥ सूत्रं बौधायनस्य " यस्यैव कस्य चाश्वस्यादद्दीतेति शालीकिः ' ॥

II. 6 5 उखानां धूपन इति ॥ सूत्रं बौधायनस्यापरिमितैर्मन्त्रैर्धूपयेदिति शालीकिः ' ॥

---

१ पाद॰ B U and G (sec. m.) Bu; पद॰ Be C′ U and G (pr. m)

२ ॰ष्टकायामपि॰ B G (sec. m.); the vivarana सर्वेष्टकार्थायां (या the Ms.) मृदि, the Ms सर्वेष्टकार्थायां (या the Ms.) मृत्तिकायाम्।

३ Thus G, U (sec m.) and the Ms.: मंत्राकर्मा॰ B; मंत्रकर्मस्वावर्त॰ Bu, कर्माभ्यावर्त॰ Be C′.

II. 6. 11. उखानां मध्ञ्जन इति ॥ सूत्रं बौधायनस्यै" कामेवोखां मन्त्रेण मध्ञ्ज्यात्तूष्णीमितरे इति शालीकिः ' ॥

II. 6. 14 ताः प्राचीर्वोदीचीर्वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीके: ' ॥

II. 6. 15. पचन इति ॥ स ह स्माह बौधायन उखा ऋषभाल्पाषड्लेष्टका बार्हस्पत्यं महावीरं लोकंपृणा इत्येतद्गार्हपत्यात्पचेद्येतरद्ग्रामाग्नेरिति " यत्किं चेष्टकोक्तं ग्रामाग्निना तत्पचेद्धविरुक्तं गार्हपत्यादिति शालीकिः ' ॥

II. 8 7. पञ्चशीर्षाणां करण इति ॥ मत्यचाणि वा मार्त्तिकानि वा स्युरिति बौधायनः " मत्यचाण्येवेति शालीकि" र्हिरण्मयानीत्यौपमन्यवो " वायव्यग्निरसि वैतान्मन्त्रान्निगदेदित्यौपमन्यवीपुत्रः ' ॥

II. 9 1 त्रिरपसव्यैः पर्णशाखया परिकर्षतीति ॥ सूत्रं बौधायनस्यानुपरिकीर्यैव मापान्यमगाथाभिः परिगायेदिति शालीकिः ' ॥

II. 10. 9. आघार इति ॥ उभाभ्यां मन्त्राभ्यामेतमाघारमाघारयेदिति बौधायनो " हिरण्यगर्भः समवर्तताग्र इत्येतयैवैतमाघारमाघारयेदिति शालीकिः ' ॥ २ ॥ प्रथमः ॥

अनिष्टप्रथमसोमस्याध्वरहोमाहुतीनाᳪ होम इति ॥ अध्वरहोमाहुतीर्हुत्वाग्निका जुहुयादिति बौधायन " आग्निका एवेति शालीकिः ' ॥

II. 11. 12 वैराजीषु दीक्षास्विति ॥ स ह स्माह बौधायनो नाम-

वत्सरꣳ सोम्यन्वैराजीर्दीक्षाः कुर्वीत ' कामꣳ संवत्सरꣳ
सोम्यन्वैराजीर्दीक्षाः कुर्वीत ' संवत्सरं वा स्वैकाहिकं[1]
कुर्वीतैकाहिकस्त्वेवाग्निरिति[2] शालीकिः ' ॥

II. 13. 7. काम्यस्यान्ववधान[3] इति ॥ जाते काम्यमन्ववदध्यादिति[4]
बौधायनः " पुरस्तादेवेति शालीकिः ' ॥

II. 13. 16. औदुम्बरीणाꣳ समिधामभ्याधान इति ॥ सूत्रं शालीके-
र"चो ह स्माह बौधायन एकामेव समिधं पश्चार्चिनाभ्याद-
ध्यात्तदेव राचोग्निꣳ स्यादिति ' ॥

II. 15. 14. अन्नपतीयायै समिधो ऽभ्याधान इति ॥ सूत्रꣳ शालीके-
र"चो ह स्माह बौधायनो ऽन्नपतीयां प्रतिसमेधनीयां वैष्ण-
वीमित्येता अभ्यादध्यादिति ' ॥

II. 16. 2. वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ अहरहः संनिपातये-
दिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

उख्य उद्वाते प्रायश्चित्तकरण[5] इति ॥ स ह स्माह बौधा-

---

१ Thus G U C' and the Ms., स्वैकाहिकं B Bu; स्वैकाहं Bc.

२ According to the vivaraṇa of this dvaidham, given in Ms., the इति, which is missing in all the MSS, ought to be inserted before ऐकाहिकस्त्वे॰ ।

३ Thus U (sec m.) C'; ॰स्याभ्याधान the other MSS.

४ Thus B Bq C' Bu G (sec. m.) U (sec. m.); ॰भ्यादध्या॰ G (pr. m.) and the Ms.

५ प्रायश्चित्तस्य करण G (sec m.) U

यनः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयादथैतत्कर्माहिता कुर्यादित्यन्यो ह स्माह शालीकिः प्रवृज्य परिदायाकाङ्क्षतिभिरभिजुहुयान्न चैतत्कर्माहिता कुर्यादिति[१] ॥

I. 16. 12. प्रयाण इति ॥ स ह स्माह बौधायन उभयेन प्रयायादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः[१] ॥

165. 15. अथ यद्यपर्याणा[१] अप उपाधिगच्छतीति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनो यत्रैवापर्याणा अप उपाधिगच्छेत्तद्भस्म प्रवेशयेन्न च विगर्भां तां कुर्याद्यावन्मात्रं वादाय प्रत्यवदध्यात्प्रमद्य भस्मना योनिमित्यथैतत्स्थालीषु वा सतेषु वानुनिधापयेदिति[१] ॥

17. 13. देवयजनस्याध्यवसान इति ॥ स ह स्माह बौधायन उभयेनाध्यवस्येदाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः[१] ॥ ३ ॥

18. 14. संभाराणां निवपन इति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनो भस्म चैवोपाꣳशु मन्त्रेण निवपेत्तूष्णीमितरौ संभाराविति[१] ॥

I. 19. 4. गार्हपत्यचिताविति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनोऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[२] सर्वमेवैतत्कर्माहिता कुर्यादिति[१] ॥

---

१ Thus here and infra all.

२ Thus *Bo C'* and *cp.* XXIII. 15, ॰धिद्रवणावद्रवण इति B ॰धिद्रवणावद्रवणं इति U (sec m.) Ms; ॰धिद्रवणमिति Bu G U (pr. m.).

साहस्रं चिन्वीत प्रथमं चिन्वानः पञ्चचितीकं चेति ॥ स ह स्माह बौधायनः समाप्यैताश्चतुर्थं चिन्वानो जानुदघ्नं चात ऊर्ध्वं प्रत्याद्दधीत पञ्चचितीकं चेत्य[1]थो ह स्माह शालीकिः समाप्यैतांश्चतुर्थं चिन्वानो ग्रीवदघ्नं चैवात ऊर्ध्वं प्रत्याद्दधीतैक-चितीकं चेति[1] ॥

वात्सप्रविष्णुक्रमयोः संनिपात इति ॥ स ह स्माह बौधायनो यद्यह[1] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय संनिवापेन प्रक्रामेदित्य[1]थो ह स्माह शालीकिर्यद्यह[2] वात्सप्रमुपवसथे संपद्येत वात्सप्रेणोपस्थाय श्वो भूते संनिवपेताथ यदि विष्णुक्रमा उपवसथे संपद्येरन्विष्णुक्रमैः क्रमित्वा वात्सप्रेणोपस्थाय श्वो भूते संनिवापेनैव प्रक्रामेदिति[1] ॥

II. 20. 3 तस्यामन्यचावेक्षमाणो दधिद्रप्सान्प्राश्यत्यमुं ते शुचि दधामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः[1] ॥

II 20, 5 अथैनाङ् सिकताभिः पूरयित्वा दर्भोपरिष्टात्संप्रच्छाद्येति ॥ सूत्रं बौधायनस्य[1] सिकताभिरेवैनां[2] पूरयित्वोत्तरे शाखाखण्डे निदध्यादिति शालीकिः[1] ॥

---

१ Thus Bu U G (sec. m.) Be C'; यदिह B G (pr. m), यदि M.
२ °रेवैनां Bu Be C'; °रेवैनाः B G U Ms.

II. 20. 7. शिक्यस्यादान इति ॥ मन्त्रेणाददीतेति बौधायनस्तू॑ष्णी-मिति शालीकिः॑ ॥

I. 20. 15. नैर्ऋतीनामुपस्थान[1] इति ॥ कुर्वीतात्र तद्यादेवतमुदुदोहचे[2] इति[2] बौधायनो॑ न कुर्वीतेति शालीकिः॑ ॥

I. 20. 17.[1] उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो॑ यथोपपादमिति शालीकिः॑ ॥

II. 21. 1 गार्हपत्यस्योपस्थान इति । सूत्रं बौधायनस्त्वाहवनीय-मेवैतेन यजुषोपतिष्ठेरन्निति शालीकिः॑ ॥ ४ ॥ द्वितीयः ॥

21. 13 स्तम्बयजुषो हरण इति ॥ सूत्र बौधायनस्त्वोपरवकाशा-द्यथाग्नीध्रो हरेदिति शालीकिः॑ ॥

I. 57. 4 आख्यातं चात्वालस्य परिलेखनम् ॥

I. 57. 7 आख्यातं लोकाग्नीनाꣳ हरणम् ॥

I. 94. 5 आख्यातꣳ स्फ्यविघनानामुपस्थानम् ॥

21. 17 कार्ष्णाजिनीनामुपमोचन इति ॥ पूर्वः कल्पो बौधायन-स्योत्तरः शालीकेः॑ ॥

I. 22. 6 वज्रिणीनामुपधान इति ॥ सूत्रꣳ शालीकेर॑र्चो ह स्माह बौधायनो ऽग्रेण यूपावटीयꣳ शङ्कुं तिष्ठन्ननुदधिष्ण्यं कृत्वा प्राञ्चं बाणं प्रविध्येत्तमनुद्रुत्यास्मानमुपदध्यादेवं दक्षिणत एवं पश्चादेवमुत्तरत इति॑ ॥

---

१ °मुपधान most of the MSS.

२ Thus B G; °दोहचे इति Bu; °दोहच इति Bo; °दोहमाविति U (sec. m.), Ms , C' uncertain

I. 23. 2. ऐन्द्रिया[1] उपधान इति ॥ सूत्रं बौधायनस्य " पुच्छ ऐन्द्रीमुपदध्यादिति शालीकिः ' ॥

I. 23. 8. उदपात्रस्योपनिनय इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो " यथोपपादमिति शालीकिः ' ॥

ib दर्भस्तम्बस्योपधान इति ॥ वाक्षा समुद्र उपदधामीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

I. 23. 10. दूर्वेष्टकाया उपधान इति ॥ स ह स्माह बौधायनो दूर्वया वा सहोपदध्याद्वा[2] वैवेति[2] " मन्त्रदूर्वैवैषा स्यादिति शालीकिः ' ॥

II. 23. 13. औदुम्बरं युगलाङ्गलमिति ॥ सूत्रं बौधायनस्य " दार्व्यद्धमेवैनत्कुर्यादिति[3] शालीकिः ॥ पुरुषा एवैतद्युगलाङ्गलं पुरस्तादाददते ऽध्वर्युः पश्चादिति बौधायनः " प्रत्यक्षमेवैतत्संयुज्य कृषेदिति शालीकिः ' ॥

II. 24. 1 कर्षण इति ॥ संप्रत्याहार[4] कृषेदिति बौधायन " आवाजश्च[5] इति शालीकिः ॥ ५ ॥

---

१ Thus Be G (pr. m.), ऐन्द्या Bu B G (sec m); ऐन्द्रियासु॰ Bu.

२ Thus C'; दूर्वावैवेति B Be G; चैवेति U (sec. m); वेति U (pr. m.).

३ Thus C' the Viv. and Ms. ॰द्दद्ध॰ the other MSS.— ॰मेवैतत्कु॰ G Ms, ॰मेवैनेकु॰ Be C'.

४ Thus Be C'; संप्रत्यहारं Bu G, संप्रत्यगाहारं U, प्रत्यहारं B. संप्रत्याहृत्याहृत्य the Viv.

५ Thus B G U and the Viv.; आवाजन Bu, आवाज Be C'. Meaning uncertain

23.16 गोयुगानामनुमन्त्रण इति ॥ तत्तद्देवानुमन्त्रयेदिति बौधायनः " सर्वाणि मंहेति शालीकिः ' ॥

24.10 सर्वौषधस्य वपन इति ॥ अर्धवंशो वपेदिति बौधायन " स्वर्चेति शालीकिः ' ॥

24.14 *इतरमितरत्र विपरिहरन्नीतरमितरत्रेति* ॥ सूत्रं बौधायनस्योदद्दान *एवैतां दिशमभिसंपादयेदिति* शालीकि" *र्यजुषा यजुर्विपरिहरेदित्यौपमन्यवः* ' ॥

26.8 स दर्भपुञ्जीलानि पयःप्रोक्ष्ये ऽवधाय तैः प्रोक्षत्यग्नीन्वो ऽग्निभ्यो जुष्टान्प्रोक्षामीति वा तूष्णीं वेति । पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

27.5 कुम्भेष्टकानामुपधान इति ॥ सूत्रं बौधायनस्य " पक्षपुच्छेष्वेना[1] उपदध्यादिति[1] शालीकिः ' ॥

नानामन्त्रासु दिशो भजमानास्विति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधायनस्" तामेवेष्टकां परिनिस्तिष्ठेदिति शालीकिः ' ॥

इष्टकागणानामुपधान इति ॥ तयादेवतेनानुक्रम्य पारे सूददोहसः कुर्वीतेति बौधाय"नस्तंतमेवेष्टकागणं परिनिस्तिष्ठेदिति शालीकिः ' ॥

3.8-10. अभिमर्शो ऽग्निहोम इति ॥ सूत्रमाचार्ययोर्"न्नो ह स्माहौ-

---

[1] Thus B G C (see m.), °पुच्छेतामुप° Bu, °पुच्छेष्वका उप° Bg C.

यमन्यवः पुरस्तादभिमर्शाभिहोमाभ्यां तथादैवतसूददोहमः[१] कुर्वीतेति ॥

II.29.15. सर्पशिरस[२] उपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II.30.10. औदुम्बरं चोलूखलमुसलमिति ॥ सूत्रं बौधायनस्य दार्श्यहवमेवैनत्कुर्यादिति[३] शालीकिः ॥ ६ ॥

II.30.11. सर्वौषधस्यावहनन इति ॥ मन्त्रेणावहन्यादिति बौधायनस्तूष्णीमिति शालीकिः ॥

II.30.17. उखानामुपधान इति ॥ सूत्रं बौधायनस्यैकामेवोखां मन्त्रेणोपदध्यात्तूष्णीमितरे इति शालीकिः ॥

II.31.13. पशुशीर्षाणामुपधान इति ॥ सर्वा उपदध्यादिति बौधायनोऽन्त्येषु तस्य व्युदूह्योपदध्यादिति शालीकिः ॥

अथर्वशिरस उपधान इति ॥ पुरस्तात्सर्वतोमुखमधोक्षयमाहृणामत्र नवर्चमथर्वशिर उपदध्यादिति बौधायनो नाथर्वशिर इति शालीकिः ॥

II.31.12. सर्वतोमुखस्योपधान इति ॥ सूत्रं बौधायनस्यानुदिशमेव[४] गायत्रीरुपदध्यादिति शालीकिः ॥

---

१ Thus all the MSS : ०दोहसौ Ms.

२ ०शिर MSS exc. C

३ ०हव्यं० MSS exc. U C' and Ms , ०मेवैन MSS exc U

४ Thus Be C* U (sec. m.) and the Vic.; the other MSS. om. एव ।

3 15. अङ्गानामुपधान इति ॥ सूत्रं बौधायनस्य[॥] विज्ञातेष्वेवाङ्गेष्वङ्गान्युपदध्यादिति शालीकिः[।] ॥

31 2 ऋषभस्योपधान इति ॥ सूत्रङ् शालीकेर्[॥]चो ह स्माह बौधायन ईषन्नत्यवहृतशिरसमेनमुपदध्याद्यथर्षभो[१] वाशितमुपतिष्ठतीति[२] [।] ॥

अतीतानामिष्टकागणानामुपधान इति ॥ आधिमुपदध्यादिति[३] बौधायनश्चि[॥]त्यन्त इति शालीकिः[।] ॥

व्रतप्रदान इति ॥ मध्यंदिने व्रत प्रयच्छेदिति बौधायनश्चि[॥]त्यन्त इति शालीकिः[।] ॥ ७ ॥ तृतीयः ॥

1 35 1 पुरीषचितेरुपधान इति ॥ सूत्र बौधायनस्य[॥] पूर्वेष्वेव पुरीषचितिं परिनिष्ठितिष्ठेदिति शालीकिः[।] ॥

अश्वावभितस्तिष्ठेतां कृष्ण उत्तरः[४] श्वेतो दक्षिण[५] इति ॥ अश्वाभ्यां तिष्ठद्भ्यां घासमाहारयेदिति बौधायनः[॥] कालेकाल एवैनावुदानयेयुरिति शालीकिः[।] ॥

39 1 वालखिल्यानामुपधान इति ॥ उपरिष्टादालखिल्या उपदध्यादिति बौधायनः[॥] पार्श्वत इति शालीकिः[।] ॥

---

१ Thus (प्रत्यवहृत॰) U G (pr. m.) C' and Ms., ॰प्रत्यवदम॰ Bu, प्रत्यवयहृत॰ Bc G (sec. m.), प्रत्यगवहृत॰ B

२ Thus G and Ms., वाशिमसुप॰ or वाशितामुप॰ the other MSS

३ Thus B G U (sec. m.), Ms. and the Vrs., अधि॰ Bu अदि॰ Bc C' U (pr. m.).

४ उत्तरत G C and the Vr.

५ दक्षिणत B G.

II. 41. 1 सृष्टीनामायतन[१] इति ॥ अग्रेण स्वयमातृण्णामुदीचीरेना आयातयेदोत्तरस्मात्पक्षसंधेः सर्वतो[२] वेति[३] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 41. 5. व्युष्टीनामुपधान इति ॥ स्रुचश्च शालीकेरथो ह स्माह बौधायनः पुरस्तादेनाः प्रतीचीरुपदध्यात्पुरस्ताद्धि प्रतीची रात्रिर्व्युच्छतीति ॥

II. 42. 18 तासां पुरीषवतीं मध्य उपदधातीति ॥ स ह स्माह बौधायनः पुरीषेण वा सहोपदध्यात्पुरीषं[३] वेवेति मन्त्र-पुरीषैवैषा स्यादिति शालीकिः ॥

II. 42. 20 वैराजानामुपधान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीके ॥

II. 43. ० याज्ञसेनीनामुपधान इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ।

II. 43. 21 घृतेष्टकानामुपधान इति ॥ स ह स्माह बौधायनो घृतेन वा सहोपदध्याद्घृतेन वाभ्यज्येति ॥ मन्त्रवत्ता एवैताः स्युरिति शालीकि घृतपिण्डानेवात्रोपदध्यादित्यौपमन्यवः ॥

१ Thus C' (sec. m.), Ms, the Vn. (one copy); ॰मायतन the other MSS

२ Thus Ms and the Vn., सर्वत इति वेति Ba B G U (pr. m.) सर्वत एवेति U (sec. m.) Be C'

३ Thus G, ॰र्वद्वेति B Be Ba, सर्वतिवेति U, ॰र्वैमवेति C', ॰सर्वद्वेति the M,

इष्टकानामावापस्थान इति ॥ अन्तरेण ज्योतिष्मतीश्च भूतेष्टकाश्चैतदिष्टकानामावापस्थानं भवतीति ॥ स ह स्माह बौधायनः संवेशनयजुः प्रवृद्धयजुः प्रयाणयजुरपर्याणयजुः मामिधेनीराप्रीरतीताꣳश्चेष्टकागणानत्रोपदध्यादित्यत्रो[१] ह स्माह शालीकिर्नानिष्टकं मन्त्रमिष्टकावदापादयेदतीतानेवेष्टकागणानत्रोपदध्यादिति[१] ॥

15. 1. पौर्णमास्या उपधान इति ॥ सूत्रं बौधायनस्योत्तर एवाꣳसे पौर्णमासीमुपदध्यादिति शालीकिः ॥

15. 6. नक्षत्रेष्टकानामुपधान इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनः प्रतितारकं चात्रेष्टका उपदध्यात्तत्रतत्र च रोचयेदिति ॥

15. 15. सर्वतोमुखस्योपधान इति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो व्यवेत[२] खल्विदं कृष्णस्याभिमर्शनेन[३] भवति सर्वतोमुखमुपधायाभ्यज्यैतमश्वमभिमृशेदिति ॥

16. 3. 14. वर्धनेष्विति ॥ सूत्रꣳ शालीकेरत्रो ह स्माह बौधायनो

१ Before अत्रोपदध्या॰ Bu Be C' G (pr. m.) U (sec. m.) ins. एतदेव or एतद् here and l. 6; B G (sec. m.) and the Ms. om. these words.

१ ॰पादयेदितिता॰ some.

२ व्यवेतं Be U (sec. m.) Ms. (=व्यवहितं), व्यवेतं B G, व्यवेतं C' व्यपोवेतं Bu.

३ ॰मर्शनं the Ms.

यावन्ति वर्धनानि समाने ऽहनि संनिपतेयुः सर्वेषां पारे तथादैवतसूदद्दोहमः कुर्वीतेति ' ॥ ८ ॥ चतुर्थः ॥

I 47.9 अथ प्रोक्षणीषु हिरण्यशल्कान्प्रत्यस्यत्यूर्ध्वं[१] त्रिभ्यो ऽपरिमितानिति सहस्रमिति प्रोक्तं ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

II.48.9 शतरुद्रीयस्य होम इति ॥ सूत्रमाचार्ययोः '' पूर्वस्मिन्नेवानीके जुहुयादिति गौतमः ' ॥

II 49.8 नमस्कारैरुपस्थान इति ॥ स ह स्माह बौधायनः सधनुष्क एवोपतिष्ठेतोत्तरस्या एव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेत्य''थो[२] ह स्माह शालीकिर्दक्षिणैव धनुरुपतिष्ठेतैतस्यै चैव दिश आवृत्यैतेनैव यथेतमेत्य पश्चात्प्राङ् तिष्ठन्नूर्ध्वामुपतिष्ठेतेति[२] ' ॥

II 49 15 परिषिच्यमाने यजमानं वाचयतीति ॥ सूत्रङ् शालीकेर''थो ह स्माह बौधायनः परिषिच्यपरिषिच्यैवाश्मनि कुम्भं निदध्यादश्मङ्स्ते क्षुदमु ते शुगृच्छत्वित्यभिनिर्दिशेद्वा द्विष्यादिति ' ॥

II.50 3 विकर्षेण इति ॥ अर्धर्चशो विकर्षेदिति बौधायन '' ऋचर्चेति शालीकिः ' ॥

---

१ आवपति instead of प्रत्यस्यति Be C.

२ Thus (आथो ह) Be C and the Vn., अथो ह all the other MSS. and the Ms

I. 52. 3. स्वयमातृण्णायै व्याघारण इति ॥ सूत्रं बौधायनस्याग्निचतुरश्रामेनां व्याघारयेदिति शालीकिः ' ॥

I. 53. 4. वैश्वानरमारुतानां मन्त्रामन्त्र इति ॥ मन्त्रवन्तः स्युरिति बौधायनस्'' तूष्णीका इति शालीकि'' र्वैश्वानर एव मन्त्रवान्स्यात्तूष्णीका मारुता इत्यौपमन्यवः ' ॥

I. 53. 6 अनीकवतस्य होम इति ॥ सूत्रं बौधायनस्याहवनीय एवानीकवतं जुहुयादिति शालीकिः ' ॥

I. 54. 4 अथैनꣳ संचितमाज्यप्रोक्षेण प्रोक्षतीति ॥ सूत्रꣳ शालीकेर्'' चो ह स्माह बौधायनो मन्त्रानुदिशं चैनं प्रोक्षन्मन्त्रानुलोकं चेति ' ॥

54. 12 इध्मस्य निधान इति ॥ स ह स्माह बौधायन उभयेनेध्मं निदध्यादाध्वरिकेण चाग्निकेन चेत्याग्निकेनैवेति शालीकिः ' ॥ ९ ॥

I. 55. 1 शकलैः परिधान इति ॥ आहवनीयं परिदध्यादिति बौधायनः '' पुच्छमेवेति शालीकिः ' ॥

I. 55. 5 स्रुवाहुत्योः करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

55. 7 पूर्णाहुत्यै[1] करण इति ॥ कुर्यादिति बौधायनो '' न कुर्यादिति शालीकिः ' ॥

I. 55. 8, 10 अत्र शुक्रानमा दिशो ध्यायेदिति[2] ॥ दिग्भ्यो ऽहमग्नि-

---

1 Thus Ms. only, पूर्णाहुत्योः the MSS.; पूर्णाहुतिकरण the Vn.

2 इति om. all exc. Ms.

मभिभंभराणीति वा तूष्णीं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः[1] ॥

II. 56 8 प्रत्येकस्यायातन[2] इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 56 10 तस्मिंश्चतुर उपस्तृणान आहेति ॥ सूत्रं बौधायनस्य " नोपस्तृणीतेति शालीकिः[1] ॥

II. 56 12 प्रत्येकस्यानुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः[1] ॥

II. 56 13 ब्रह्मौदनस्य श्रपण इति ॥ अग्न्याधेयवच्छ्रपयेदिति बौधायन " एतस्मिन्नेवेति शालीकिः[1] ॥

II. 56 14 ब्रह्मौदनस्य प्राशन इति ॥ उत्तरे ओषधन्ते प्राश्नीयुरिति बौधायनः " पुच्छमेवाभित इति शालीकिः[1] ॥

II. 57. 4 वातनामानाऽं होम इति ॥ सूत्रं बौधायनस्य " वातमथवाञ्जलिना जुहुयादिति शालीकिः " कृष्णाजिनपुटेन जुहुयादित्यौपमन्यवः[1] ॥

II. 57. 9 शाकलानामनुप्रहरण इति ॥ अनुप्रहरेदिति बौधायनो " नानुप्रहरेदिति शालीकिः[1] ॥ १० ॥ पञ्चमः ॥

II. 57 12 अग्निधिष्ण्यानामुपधान इति ॥ सूत्रं बौधायनस्य " सर्वा एव याजुषीरुपदध्यादिति शालीकिः[1] ॥

---

१ The two aksaras सम effaced in G

२ ॰यतन MSS exc Be G².

18.2 नानाबीजानां निर्वपण इति ॥ निर्वपणेनानुप्रसेत्य[१] भ्यभिमृशेदिति[१] बौधायनस्" तदेव हविः परिनिस्तिष्ठेदिति शालीकिः ' ॥

तेषां व्रीहिष्वेव हविष्कृतमुदादयत्युपोषच्छन्ते यवामिति ॥ सूत्रं शालीकेर्" न्नो ह स्माह बौधायन आवपनप्रभृति यवेषु मन्त्रकर्माभ्यावर्तेत तन्त्रं तु हविष्कृत्[२] स्यादिति ' ॥

आप्यनिनयन इति ॥ जघनेन गार्हपत्यमाप्येभ्यो निनयेदिति बौधायनो " ऽग्रेणातिहायेति शालीकिर्" ग्रेण वा जघनेन वेत्यौपमन्यवः ' ॥

सचरुपशुपुरोडाशा[३] एवेतरेषाꣳ हविषामिडा अवद्येद्भ्यर्धादिति[४] ' सपशुपुरोडाशानां वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ' ॥

8 7 अत्याक्रमण इति ॥ सूत्रं बौधायनस्य " सह स्विष्टकृतात्याक्रामेदिति[५] शालीकिः ' ॥

10 अभिषेक इति ॥ सूत्रमाषार्ययोर्" न्नो ह स्माहौपमन्यवः

---

१ ॰प्रसेत्याभिमृशेदिति U (sec m.).

२ Thus G (sec. m ) Bu Be C′ Ms, ॰ष्कृत B G (pr m.) U; cp. XXI. 4. 75 7, XXI. 16 99. 16

३ ॰पशु॰ om B G U′ (pr. m.) the Vir — ॰डाश B Bu G U (pr. m.) the Vir.; ॰डाशा Be C′ U (sec. m.).

४ Thus (and cp II. 71. 5) B G B; ॰दत्यर्धादिति Be C′ ॰दध्यर्धेति Bu.

५ Thus U (pr m ) C′, the Vir ; स्विष्टकृतात्या॰ the other MSS.

पुरस्तात्त्विष्टकृतो यावदाम्नातेनाभिषिञ्चेन्नात्र कृष्णाजिनं न दक्कौ[१] न पार्णानि भवन्ति कुशानेव सङ्स्तीर्य तेष्वेनमभिषिञ्चेदिति ' ॥

II. 58. 18; 59. 8. योगे विमोक इति ॥ अहरहर्युञ्ज्यादहरहर्विमुञ्चेदिति बौधायनो " ऽहरहर्युञ्ज्यादन्ते विमुञ्चेदिति शालीकिरादित एव युञ्ज्यादन्ते विमुञ्चेदित्यौपमन्यवः ' ॥

II. 59. 11. क्रतुकरण इति ॥ सूत्रं बौधायनस्य " यथाकालेवास्य क्रतुकरणानि कुर्यादिति शालीकिः ' ॥

II. 59. 13 ऐकादशिनानां[२] पशूनामुपाकरण इति ॥ सूत्रं बौधायनस्यै"कयूप एवैकादशिनान्पशूनुपाकुर्यादिति शालीकिः ' ॥ ११ ॥

II. 59. 17. वपानां परिहोम इति ॥ तांतां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

II 60. 3 अश्वश्रावप्रापण इति ॥ सूत्रं बौधायनस्य " माध्यंदिन एव सवने ऽश्वमवप्रापयेदिति शालीकिः ' ॥

पशूनामासादन इति ॥ पशुंपशुं पश्वङ्गोत्रासादयेदिति बौधायनो " मुख्यमेवेति शालीकिः ' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः " सर्वाण्सहेति शालीकिः ' ॥

---

१ Thus Be C' U (sec. m); दक्का' the other MSS.

२ C' and the Viv. एका॰ ।

62. 1. आभिचार्ये मन्त्रामन्त्र इति ॥ मन्त्रवती च स्यादध्यवदानीया चेति बौधायनस्तू″ष्णीका च स्यादध्यवदानीया चेति शालीकि″र्मन्त्रवती च स्यात्तन्त्रहरया चैनया निरूढया यजेतेत्यौपमन्यवः ′ ॥

62. 6.५ दैविकाहविषां करण इति ॥ कुर्यादिति बौधायनो ″ न कुर्यादिति शालीकिः ′ ॥ १० ॥ षष्ठः ॥

. 1. अथातो वाजपेयं व्याख्यास्यामः ॥

चिन्वीत वाजपेये ऽग्निमिति बौधायनो ″ न चिन्वीतेति शालीकिः ′ ॥

63. 3,१० औदुम्बरꣳ रथचक्रꣳ सप्तदशारमिति ॥ सूत्रं बौधायनस्य ″ दार्व्यंहचमेवैनत्कुर्यादिति[१] शालीकिः ′ ॥

63. 12. खादिरौ विरुक्मौ[२] वभ्रैर्यूतामुपकल्पयत[३] इति ॥ सूत्रं बौधायनस्य ″ वस्ताजिनं चैवात्रोपकल्पयीत शतमानं च हिरण्यमिति शालीकिः ′ ॥

63 13 १५ स यीपस्य जघन्यादःस्तु पुरस्तादाषाढ्यौ पौर्णमास्यै दीक्षत इति ॥ सूत्रं बौधायनस्य ″ शरदि वाजपेयेन यजेतेति शालीकिः ′ ॥

---

१ •रच्म• G (sec. m.).— •मेवैनत् G (pr. m.) U, •मेवैतत् the other MSS.

२ Thus G and the Viv ; विरुक्मि Bu, विनूक्मौ B, विवुक्म्यौ U, विकर्णौ Be, विकर्णौ C′ (pr. m.), विरुक्मौ (sec. m.)

३ Thus G, वध्वैयू• Be, वभ्रैयू• C′, वंधेस्र• Bu, वाधेयूं• U, दध्युयूं• B, वभ्रैर्यूं• the Viv. (one copy), वभ्रैत• (another)

II. 64. 4; 65. 10. सावित्राणाꣳ होम इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 64. 12. वाजपेयिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोः'' उभयो ह स्माहौपमन्यवो यथैव सुरा स्यात्तत आहारयेदिति ' ॥

II. 65. 4 यो ऽरत्निमात्रेऽरत्निमात्रे वा विपश्याति धनुर्वष्टीर्वा प्रवेष्ट्यतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 65. 5. गौधूमं[1] चषालमिति ॥ सूत्रं बौधायनस्य '' गोधूमपिष्टानामपि कुर्यादिति शालीकिः ' ॥

II. 66. 2. दुन्दुभीनामासञ्जन इति ॥ सूत्रं द्वैधमेवैतद्भवति ॥

II 66. 14. क्रतुकरण इति ॥ सूत्रꣳ शालीकेः'' अथो ह स्माह बौधायनो ऽतिरात्रमथच क्रतुमुपेयात्तस्मिन्नपच्छे चैनꣳ संतिष्ठापयिषेदिति[2] ॥ १३ ॥

II. 66. 16. पञ्चैन्द्रानतिग्राह्यान्गृह्णातीति ॥ सूत्रं बौधायनस्य '' सर्वं एवैते[3] सोपयामा[4] गृहीतव्या[4] भवन्तीति शालीकिः ' ॥

II. 67 10. सुराग्रहाणां पवन इति ॥ सूत्रं बौधायनस्य '' सजुष्टान्यरिस्रुत्य[5] सादयेदिति शालीकिः ' ॥

---

१ Thus G and the Viv. (one copy). गौधमं Bu; गोधूमं the other MSS.

२ Thus Be C' U (sec. m); संनिषथिषेदिति B G; संष्ठपयिषेदिति Bu.

३ Thus G C'; एवैते U, एवैतेः B Be; Bu defective.

४ सोपयामस्त्रवो॰ U.

५ Thus Be C'; सपरुष्टा॰ Bu U, सपरुष्ट्वा॰ B G.

. 67, 12. द्विश्रेणि[१] वा त्रिश्रेणि[१] वोदीच आयातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

I. 68 1. षड्रशना आदाय यूपमभिप्रेयादिति बौधायनः " पञ्च रशना आदाय यूपमभिप्रेयादिति शालीकिश्चतस्रो रशना आदाय यूपमभिप्रेयादित्यौपमन्यव " एकामेव रशनामादाय यूपमभिप्रेयादित्यौपमन्यवीपुत्रो " ऽग्नीषोमीयरशनायामेव नियुञ्ज्यादित्याग्नीगविः ' ॥

I. 68. 2. वाजपेयिकानां पशूनामुपाकरण इति ॥ ऐकादशिनानुपाकृत्य[२] वाजपेयिकानुपाकुर्यादिति बौधायनो " वाजपेयिकानेव नैवैकादशिनानिति शालीकिः ' ॥

. 3. प्राजापत्यानामुपाकरण इति ॥ एकैकश उपाकुर्यादिति बौधायनः " सर्वान्सहेति शालीकिः ' ॥

. 70 3 वपानां परिहोम इति ॥ तासां परिजुहुयादिति बौधायन " आदितश्चान्ततश्चेति शालीकिः ' ॥

हृदयशूलानामुद्वासन इति ॥ एकैकश उद्वासयेदिति बौधायनः " सर्वान्सहेति शालीकिः ' ॥

72 15, . 15. रथानामभियोजन इति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो य एवैष समवक्षेपणो मन्त्रस्तं प्रथममभियोजनानां कुर्यादथ तूष्णीमश्वान्समवक्षिपेदिति ' ॥

. 76, 5, काष्ठागमन इति ॥ स ह स्माह बौधायनः प्रदक्षिण-

१ द्विश्रे० and त्रिश्रे० G (sec. m.).

२ एका० the Viv.

मावृत्यैतां[१] काष्ठां गच्छेयुरथामुतोऽपसलैरावर्तेरन्नित्यु[॥]भो ह स्माह शालीकिरपसलैरावृत्यैतां[१] काष्ठां गच्छेयुरथामुतः प्रदक्षिणमावर्तेरन्निति ' ॥ १४ ॥

II. 79. 14. अथ यजमानं तार्प्यं परिधापयतीति ॥ सूत्रं बौधायन-स्यौभे एवैते यजमानं परिधापयेदिति शालीकिः ' ॥

II. 80. 2. अग्नित्या आयातन[२] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 80. 5. तां दशभिः कल्पै[३] रोहतीति[३] ॥ सूत्रं बौधायनस्यै[॥]तैरेव मन्त्रैः प्रत्यवरोहेदिति शालीकिः ' ॥

II. 81. 2 अत्रास्मै प्रत्यवरोहणत[४] आसन्दीं निदधातीति[५] ॥ सूत्रं बौधायनस्य[॥] वस्ताजिनं चैवास्यात्र[६] प्रत्यवरोहेच्छतमानं[७] च हिरण्यमिति शालीकिः ' ॥

---

१ Thus both times C' only, °हत्वेतः both times G and B the second time; हंत्वेत B the first time, all the MSS. (exc. C') °त्य°, not °त्ये° ।

२ Thus B G, आयतन the Viv, आतन Bu, आधान Be C'.

३ Thus G U C' (sec m.) and the Viv ; °स्योरोह° Bu, °स्यैरारोह° B Be

४ Thus only the Viv., प्रत्यवरोहन the MSS.

५ Thus the Viv., निमिमोतीति Be, मिमोतीति C', प्रत्यवदधातीति B Bu G U

६ Thus B U G; वैवास्यच Bu; च only Be C, चस्य seems superfluous

७ Before शतमानं B Bu U G ins. इति ।

II. 81. 5. अथैनमेतयामन्द्या मद आवहन्त्या वा मजतीति[१] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 81. 8. अतिग्राह्याणां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

I. 83, 10. प्राजापत्यानां भक्षण इति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II 84. 2 शुद्धवतीयेष्विति ॥ द्वेद्वे अत्र शुद्धवतीये उपयष्टोपयजेदिति बौधायनो ऽपच्छेदमिति शालीकिः समस्तान्येवैतान्यनुप्रद्रुत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः ॥ १५ ॥ सप्तमः ॥

II. 85. 1. अथातो राजसूयं व्याख्यास्यामः ॥

चिन्वीत राजसूये ऽग्निमिति बौधायनो न चिन्वीतेति शालीकिः ॥

II. 85. 9 पुनरभ्युप्य पिष्टानि कृत्वा धारयेदिति बौधायनस्त्वभ्युप्तान्येवैतानि[२] स्युरिति शालीकिः ॥

I 85. 10 नैर्ऋतस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तूष्णीक इति शालीकिः ॥

I 85. 12. एकोल्मुकस्य हरण इति ॥ अन्वाहार्यपचनाद्धरेदिति बौधायनो ग्रामाग्नेरिति शालीकिः ॥

II. 86. 1 नैर्ऋतस्य होम इति ॥ सूत्रं बौधायनस्य विस्रङ्मिकाकाण्डाभ्यामेनं परिगृह्य जुहुयादिति शालीकिः ॥

---

१ मजंतीति G B, हविर्भीति Bu; U Be C' corrupt.

२ Thus G; •भ्यप्यान्ये• U, •भुपन्ये• B, •दप्राप्ये• Be C'.

II. 86. 3 दक्षिणानां दान इति ॥ अहरहर्दद्यादिति बौधायन" आदितस्त्वन्ततश्चेति शालीकिः ' ॥

II. 86. 3. उदपात्रस्योपनिनयन इति ॥ प्रदक्षिणमुपनिनयेदिति बौधायनो" यथोपपादमिति शालीकिः ' ॥

II. 86. 5. स्वाहा नमो य इदं चकारेति ॥ सूत्रं बौधायनस्यान्तमयत्र स्वाहाकारं परिणयेदिति शालीकिः ' ॥

II. 87. 1. संततीनामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहरिष्ट्या वा पशुना वा यजेतापि तदहः संततौ[1] प्रयुञ्जीतेत्य"थो ह स्माह शालीकिरहरहराश्रावणार्थं खल्वेते दृष्टे भवतो ' यदहरिष्ट्या वा पशुना वा यजेत न तदहः संततौ प्रयुञ्जीतेति ' ॥

ib. चातुर्मास्यानामनुप्रयोग इति ॥ स ह स्माह बौधायनो यदहश्चातुर्मास्यानि प्रयुञ्जीतापि तदहः संततौ प्रयुञ्जीतेत्य"थो ह स्माह शालीकिरहरहराश्रावणार्थं खल्वेते दृष्टे भवतो ' यदहश्चातुर्मास्यानि प्रयुञ्जीत न तदहः संततौ प्रयुञ्जीतेति ' ॥

II. 88. 17. आख्यातं पश्वैभीयस्य करणम् ' ॥ १६ ॥

II. 89. 3 यथोपवेषेणाङ्गारान्समूहतीति ॥ सूत्रं शालीकेर"थो ह स्माह बौधायनस्तूष्णीमङ्गारान्समूह्याथैनान्स्रुवाहुतिभिरभिजुहुयादग्नये[2] रक्षोघ्ने स्वाहेति पञ्चभिर'थ प्रष्टिवाहिनं रथं दद्यादिति ' ॥

---

1 Here and infra some of the MSS. read संततीः (संततौ).

2 स्रुवाहुती° Be U C', स्रुवाहुत्या° Bu.

89. 11. अपामार्गसक्तूनाᳲ होम इति ॥ सूत्रᳲ शालीकेर्" वो ह स्माह बौधायनः समस्तेनैवास्मै मन्त्रेणापामार्गसक्तूञ्जुहुया-त्तूष्णीᳲ स्रुवमनुप्रहरेत्तूष्णीमुपोत्तिष्ठेदिति[1] ' ॥

89. 15. देविकाहविषां करण इति ॥ सूत्रं बौधायनस्य " सोमᳲसोममनुवर्तेरन्निति शालीकिर्" न देविकाहविर्भिर्यजे-दित्यौपमन्यवः ' ॥

91. 3. अग्निभिः प्रत्यवसान इति ॥ अजस्रैः प्रत्यवस्येदिति बौधायनो " ऽरण्योः समारोह्येति शालीकिः ' ॥

पयसः समावेषम इति ॥ दृतौ वा विनाडे[2] वा समा-मिञ्चेदिति बौधायनो " नवायां कुम्भ्यामिति शालीकिः ' ॥

92. 14. स्वयंकृतेष्विति ॥ सूत्रᳲ शालीकेर्" वो ह स्माह बौधायनो गोन्यासप्रस्रदितानां[3] कुशानां बर्हिः संनह्येत्स्वयंपति-तानां काष्ठानामिध्मं ' यदेव वेद्यै रूपᳲ सा वेदिर्दृतिं वा विनाडं[4] वा रथ आधाय परिवहेयुस्तत्र नवनीतमुत्सीदे-त्तदाज्यᳲ स्यादिति ' ॥

93. 2. मैत्राबार्हस्पत्यस्य निर्वपण इति ॥ समानचतुर्मुष्टी स्याता-

१ ॰मुपोत्तिष्ठेदिति G U C'. ॰मुपतिष्ठेदिति B Bu Be; probably II. 89 12 उपोत्तिष्ठति is the correct reading.

२ विनाळे G U C', विनाळे the other MSS. and the Viv

३ Thus Be C' and comp. the Viv.: गवां नियमसमनैव शालिनाना कुशानां; योन्यासप्रस॰ G B Bu, येन्यासप्रस॰ U.

४ विनाळं or विनाळं MSS.

मिति बौधायनो'' नानाचतुर्मुष्टी स्यातामिति शालीकिः'

॥ १७ ॥ अष्टमः ॥

II. 94 2. रोहिते चर्मणीति ॥ सूत्रं बौधायनस्याथ रोहितं स्यादिति शालीकिः' ॥

सोमक्रयण्युपेते[1] नित्याः शते स्युरिति बौधायन'' एत एव शततमाः स्युरिति शालीकिः' ॥

II. 94. 8. वसतीवरीणां ग्रहण इति ॥ सूत्रं बौधायनस्य'' सारस्वतीरथच वसतीवरीर्गृह्णीयादिति शालीकिः' ॥

II. 94 18. आग्नेयस्यैन्द्राग्न उपालम्भ्यो भवतीति ॥ सूत्रं बौधायनस्यै''न्द्राग्न एव सवनीयः स्यादिति शालीकिः' ॥

पात्राणां करण इति ॥ यथानिर्भेदं पात्राणि कारयेदिति बौधायनः'' प्राकृतान्येवैतानि स्युरिति शालीकिः' ॥

II. 98 1. सारस्वतीनामभिहोम इति ॥ सूत्रं शालीके''र्नो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां वहन्तीरभिजुहुयात्ताभ्यां पदेपदे जुहुयादथ तूष्णीं सारस्वतीरभिजुहुयादिति' ॥

II. 98, 7. अभिषेचनीयानां ग्रहाणां ग्रहण इति ॥ सूत्रमाचार्ययो''र्नो ह स्माहौपमन्यवः पुरस्तात्सद्मो ऽभिषेचनीयान्ग्रहा-न्गृह्णीयादिति' ॥

II. 99, 16; 102, 9 धनुषः प्रदान इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

---

[1] Thus B G U (pr. m.), ॰यूपयिते Be C' U (sec. m.), ॰क्रपैक Bu

100. 9　मारुतस्यैकविंशतिकपालस्य कपालोपधान इति ॥ ऐष्टिकैरुपधाय गणैरुपदध्यादिति बौधायनो ॥ गणैरेवेति शालीकिः ॥

00. 9　आमिक्षायै मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्तूष्णीकेति शालीकिः ॥ १८ ॥

01. 2　क्लीबस्य स्थान इति ॥ अन्तर्वेदि तिष्ठेदिति बौधायनो ॥ बहिर्वेदीति शालीकिः ॥

106. 7.　मणीनां करण इति ॥ औदुम्बर औदुम्बरेण लोहेन प्रच्छन्नः स्यादिति बौधायन ॥ औदुम्बर एवेति शालीकिः ॥

107. 4.　तस्मिन्सह संग्रहीत्रा रथवाहने रथमादधातीति ॥ सूतं बौधायनस्याधाहणामेवैक[१] संग्रहीता स्यादिति शालीकिः ॥

08. 1　रत्नस्य प्रदान इति ॥ सूतं शालीकेर्नो ह स्माह बौधायनो यजमानस्यैवैकस्य मन्त्रेण संप्रयच्छेत्तूष्णीमितरे संप्रयच्छेरन्निति[२] ॥

109. 1　अक्षाणां करण इति ॥ सौवर्णाः स्युरिति बौधायनो ॥ राजता इति शालीकिर्नागदन्ता[३] इत्यौपमन्यवो ॥ वैभीतका इत्यौपमन्यवीपुत्रः ॥

ib　अथास्मै पञ्चाक्षानपच्छिद्य प्रयच्छतीति ॥ सूतं शाली-

---

१ Thus G; •सधातृणामि C', •सायाक्षणामे• U, •स्य धयातणामे• B Be, in Bu this dvandva is missing.

२ •यच्छेरन्निति G U C'.

३ Thus G B Bu U ; •दंष्ट्रा Be C'.

केर"घो ह स्माह बौधायनो येनास्यानुपपन्नं स्यात्तं तत्रापि-सूत्वेद्दिशो ऽभयं राजाभूदिति' ॥

II. 111. 8. अथ विषुवति दर्भस्तम्बे जुहोतीति ॥ सूत्रं बौधायनस्य" यत्रैव दर्भस्तम्बः स्यात्तज्जुह्वेदिति[1] शालीकिः' ॥ १९ ॥ नवमः ॥

II. 111. 14. अग्नीनां हरण इति ॥ अजस्रान्हरेदिति बौधायनो ऽरण्योः समारोह्येति शालीकिः' ॥

ib. 'वेद्ये करण इति ॥ सूत्रं बौधायनस्य" पूर्वापूर्वा वेदिर्भवतीति शालीकिः' ॥

II. 112. 10 अथैनं तीर्थादानीय पवयित्वा 'पुण्डरिस्रजिनमुदानीयेति ॥ स ह स्माह बौधायन उभयानि पुण्डरिकाणि कारयेत्सौवर्णानि च नादेयानि चेति" नादेयान्येवेति शालीकिः' ॥

II. 112. 13. निदधत्यस्मा एतद्धविरुच्छिष्टं व्रतभाजनमिति ॥ सूत्रं बौधायनस्य" नात्र हविरुच्छिष्टं व्रतभाजनं निदध्यादिति शालीकिः' ॥

I. 112 17 सोमक्रयणेषूपेते[2] नित्याः स्युरिति बौधायन" एत एव स्युरिति शालीकिः' ॥

---

१ मध instead of मत् Be C'.

२ Thus B G U (pr. m.), ॰षूपेते Bu, ॰षूपद्दिशे Be C' U (sec. m.).

औपसदाꣳ[1] हविषां मन्त्रामन्त्र इति ॥ मन्त्रवन्ति[2] स्युरिति बौधायनस्तूष्णीकानीति[3] शालीकिः ' ॥

3. 14 आग्नेयस्य प्राजापत्यस्तूपर उपालम्भ्यो भवतीति ॥ सूत्रं बौधायनस्य " प्राजापत्य एव भवनीयः स्यादिति शालीकिः ' ॥

4. 11.[4] भार्गवो होता भवतीति ॥ आदित एव भार्गवꣳ होतारं वृणीतेति बौधायनो " दशपेय एव भार्गवो होता स्यादिति शालीकिः ' ॥

शतं ब्राह्मणाः पिबन्तीति[4] ॥ यजमान[5] एकशततमः स्यादिति बौधायनो " यजमान एव शततमः स्यादिति शालीकिः ' ॥

11. 7 दक्षिणानां दान इति ॥ एता एव ब्राह्मणाभिविहिता[6] दक्षिणा दद्यादिति बौधायन " एतन्मुखꣳ सहस्रमिति शालीकिः ' ॥ २० ॥

15. 1 तेषामुत्थानेष्विति ॥ गच्छेयुरावभृथादिति बौधायनोऽप्सुषोमान्ता इति शालीकिर्ध्रुवान्ता इत्यौपमन्यवः ' ॥

15. 8. हविषोहविष इष्ट्वा बार्हस्पत्यमभिघारयतीति ॥ बार्ह-

---

१ Thus G B and the Viv ; उपसदि U, औपसदानां C', औपसदो Bu ; Bo defective.

२ °वंत MSS.

३ Thus G and U (pr. m.), तूष्णीका इति B G (sec. m.), तूष्णीकेति C', तूष्णीकामिति Bu.

४ cp. T Br. I. 8. 2. 2

५ Before यजमान G B ins. यो, U वै ।

६ °भिहिता Bu C'

स्पत्यस्यापोद्वा[1] बार्हस्पत्यमभिघारयेदिति बौधायन ॥ इतरेषामेव हविषां न बार्हस्पत्यस्येति शालीकिः[1] ॥

II 115. 13 उच्चैरादित्याया आश्रावयत्युपांश्‍[2] मारुत्या इति ॥ आदित्याश्रावणमत्युपांश्वयेतरदुच्चैरिति[3] बौधायन ॥ आ मारुत्याश्रावणमत्युपांश्वयेतरदुच्चैरिति शालीकिः ॥ सर्वैवोच्चैरादित्या सर्वोपांश्‍ मारुतीत्यौपमन्यवः[1] ॥

II 115. 15 मात्यदूतेष्विति ॥ सूत्रं बौधायनस्येमं[4] ते[4] ऽग्नौ[5] प्राहैषीदित्येव ब्रूयादिति शालीकिः[1] ॥

II. 117 14 द्विरात्र इति ॥ सूत्रं बौधायनस्य ॥ यजनीये[6] ऽहन्पूर्वमहर्भवत्युत्तरस्मिन्नुत्तरमिति शालीकिः[1] ॥

II. 118 5 दैविकाहविषां करण इति ॥ कुर्यादिति बौधायनो ॥ न कुर्यादिति शालीकिर्न कुर्यादिति शालीकिः[6] ॥ २१ ॥ दशमः ॥

॥ इति द्वाविंशः प्रश्नः ॥

१ Thus G and the Vir., •स्यापोद्वा B, स्पपिद्वा U. C′ Be corrupt. Bu defective.

२ Thus G, all the other MSS more or less corrupt.

३ Here and infra all the MSS इतर instead of इतरद् ।

४ Emended; •स्यमांवेषो Be C′ U (sec. m.), •स्यमंवेषो Bu, •स्यमंवेषे G, •स्यमंवषो B, cp XXIII. 2 and T Br. I. 8, 3 4· इमामग्निष्वोति ।

५ Thus all.

६ In the MSS. no repetition of the final words.

119. 1. अथात इष्टिकल्पं व्याख्यास्यामः ॥

स ह स्माह बौधायनः पञ्चदशसामिधेनीकाः स्युर्वार्त्रघ्ना-वाज्यभागावुच्चैर्देवता इत्य॥थो ह स्माह शालीकिः सप्तदश-सामिधेनीकाः स्युर्वृधन्वन्तावाज्यभागावुपांशुदेवता इति ।॥

याजमानस्य करण इति ॥ सङ्‌स्थितमिष्टिपर्वे[1] याजमानं कुर्यादिति बौधायनः । कुर्याद्यथावकाशं याजमानमिति शालीकिः ।॥

121. 3 अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेद्यो दर्शपूर्ण-मासयाजी सन्नमावास्यां वा पौर्णमासीं वातिपादयेदिति ॥ स ह स्माह बौधायनः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपा-लमनुनिर्वपेद्यथातिपन्नां प्रतियजेदित्य॥थो ह स्माह शालीकिः पाथिकृतं निरुप्य वैश्वानरं द्वादशकपालꣳ समानतन्त्रमनुनिर्व-पेन्न चातिपन्नां प्रतियजेदित्य॥न्यतरेणैव सहातिपन्नां प्रति-यजेदित्यौपमन्यवो ॥ ऽन्तो ह स्माहाश्मौगविर्वि वा एतस्य यज्ञश्छिद्यते यस्य तन्त्रे प्रतते ऽन्यत्तन्त्रं[2] प्रतायते । य एवैषो[3] ऽच्युत[3] आग्नेयो ऽष्टाकपालस्तमेव पौर्णमास्यां वामावास्यायां वा पाथिकृतं कुर्यान्न चातिपन्नां प्रतियजेदिति ।॥

121. 7. अग्नये व्रतपतये पुरोडाशमष्टाकपालं निर्वपेद्य आहि-

१ •मिष्टमिष्टिपर्वे G, •सिष्टमिष्टिपर्वे B, •मिष्टिमिष्टिपर्वे U, मिष्टिमिष्टपर्वे Bu, •षिष्टमिष्टपर्वे Be C'.

२ न्यमंत्रं MSS

३ Thus C'. एवैषोद्धृत U, एवैषोच्यत B G Be, एवैषाच्यूत Bu.

ताग्निः ससमत्यमिव चरेदिति ॥ आधानप्रभृत्येवैतदुक्तं भवतीति बौधायनो " ऽन्वाहितेषु चैवोपसमाहितेषु चाग्निष्विति शालीकिः ' ॥

II 121, 9. अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यꣳ रक्षाꣳसि सचेरन्निति ॥ हुत्वाग्निहोत्रमिष्टिꣳ सꣳस्थापयेदिति बौधायनः " सꣳस्थितायामिष्टामग्निहोत्रं जुहुयादिति शालीकिः ' ॥

II. 121 17. अग्नये रुद्रवते पुरोडाशमष्टाकपालं निर्वपेदभिचरन्निति ॥ स ह स्माह बौधायनो लोहितोष्णीषा लोहितवाससश्चर्त्विजः प्रचरेयुरिति " याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ' ॥

II 121, 18 अग्नये सुरभिमते पुरोडाशमष्टाकपालं निर्वपेद्यस्य गावो वा पुरुषा वा प्रमीयेरन्यो वा बिभीयादिति ॥ स ह स्माह बौधायनः प्रोक्षणीषु च गन्धानावपेयुर्गन्धवन्तश्चर्त्विजः प्रचरेयुरिति " याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ' ॥

II. 122 7. अग्नये कामाय पुरोडाशमष्टाकपालं निर्वपेद्यं कामो नोपनमेदिति ॥ स ह स्माह बौधायनो या तथाम्नाता स्यात्तां चेन्निर्वपतः कामो न समृध्येताथैव[1] कुर्यादित्येषैव सार्वकामिकी स्यादिति शालीकिः " कामेकाम एषा[2] स्यादित्यौपमन्यवः ' ॥

II 124. 1. अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्नि-

---

१ ॰ध्येत G U Be, ध्येत B C'. ॰षेत Bu

२ एषा G, एवैषा U, all the other MSS एव ।

हुत्वा ऽऽहवनीये ऽग्निहोत्रं जुहुयादिति ॥ सूत्रं शालीकेर्वो ह स्माह बौधायनो मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्रान्निगदेदिति ॥

124 17. वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जात इति । स ह स्माह बौधायन उत्थितायां निर्दशायां वैश्वानरं द्वादशकपालं निर्वपेत्संस्नाप्य च कुमारं प्रलेहयेदिति ॥ जातमेव विदित्वेति शालीकिर्न च संस्नाप्य कुमारं प्रलेहयेदित्यनन्तरे पर्वणीत्यौपमन्यवः[1] ॥ १ ॥

125, 2 विपर्यस्तहविषीति ॥ मारुतः[2] प्रथमं मन्त्रकर्म[3] लभेतेति बौधायनो ऽवदानत इति शालीकिः प्रदानत इत्यौपमन्यवश्चातुर्मास्यादित्यौपमन्यवीपुत्रः ॥

125, 9 वैश्वानरं द्वादशकपालं निर्वपेदायतनं गत्वेति ॥ यत्रैव यक्ष्यमाणः स्यात्तदायतनं तद्गत्वा वैश्वानरं द्वादशकपालं निर्वपेदिति बौधायनः स्वस्थानेष्वेवाग्निष्विति शालीकिः ॥

126, 3. यथा रज्ज्वोत्तमां गामाजेदिति ॥ सूत्रं बौधायनस्येमौ ते ऽमौ पाशैपौ दित्येव[4] ब्रूयादिति शालीकिः ॥

---

1. The words after प्रलेहयेदिति only in C and U (see m.). Be has of them only त्यौपमन्यवो; the other MSS. omit the opinion of Aupamanyava.

2. मारुतं Ba

3. तत्रं Be C' (pr. m.)

4. Thus C' U (see m.), प्रशौमो॰ the other MSS.; cp. XXII. 21 and XIII. 10 - 126. 5

II. 127. 10. वत्सज्ञानपीभि संनह्येदिति ॥ सूत्रं बौधायनस्य ॥ वत्स-ज्ञानामप्यत्र बर्हिः संनद्धं भवतीति शालीकिः ॥

II. 128. 7. आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्निति ॥ सूत्रं बौधायनस्य ॥ प्रत्यभिचरन्तमेव विद्विलेति शालीकिः ॥

ib. सारस्वतमाज्यमिति ॥ मन्त्रनिवप्रमेनद्दृतं[१] स्यादिति बौधायनस्य ॥ प्रौक्षमिति शालीकिः । कालेकाल एवैनद्भुवा-व्याहृणीयादित्यौपमन्यवः[२] ॥

II. 128. 17 अध्वरकल्पायामिति ॥ स ह स्माह बौधायन इष्टानां प्रथमं तन्त्रं कुर्यादेवं द्वितीयं तृतीयेन महावशेषं वर्तयेदि-त्यथो ह स्माह शालीकिरा प्रणीतात्प्रथमस्य[३] तन्त्रस्य परि-शाययेदेव[४] द्वितीयमेव[५] तृतीय[५] । तृतीयेन महावशेषं वर्तये-दिति ॥ अपूर्णपात्रविष्णुक्रमा[६] इत्यौपमन्यवः[६] ॥

II. 129. 7. यो ब्रह्मवर्चसकामः स्यात्तस्मा एतं सोमारौद्रं चरुं

---

१ संधनिवाप॰ B G; संधनिवप्र॰ U, सधंनिवपत॰ Bu; संधभिनवप्र॰ Be, संधनिवप्र॰ C'.

२ भुवाव्याहृय॰ G U (sec. m.), भुवाव्याव्याहृय॰ B U (pr. m.); भुवा-व्येय॰ Be C'; भुवाय॰ Bu

३ Thus Be C' U; प्रणीतात्प्र॰ B G (pr. m.), प्रणीतात् प्र॰ G (sec. m.), Bu defective

४ Thus G B; कुर्यादेव U Be C'; Bu defective

५ एवं तृतीयं om. B G

६ ॰क्रमादित्यौ॰ C' U (sec. m.).

तिष्यापूर्णमासे निर्वपेदिति ॥ उपवसथीये ऽहन्निर्वपेदिति बौधायनो '' यजनीये ऽहन्निति शालीकिः ' ॥

129. 11. आज्यं प्रोक्षणमाज्येन मार्जयन्त इति ॥ उदकुम्भ आज्यस्रुवं प्रत्यस्येदिति बौधायनः ' प्रोक्षणं चैव मार्जनं चाज्येन[1] कुर्याद्यथेतरदद्भिः कुर्यादिति शालीकि'' र्यत्किं चाद्भिः कार्यं स्यात्सर्वं तदाज्येन कुर्यादित्यौपमन्यवः ' ॥

b 16. यदि बिभीयाद्दुश्चर्मा भविष्यामीति सोमापौष्णं चरुं निर्वपेदिति ॥ विज्ञातेषु रूपेषु निर्वपेदिति बौधायनः '' पुरस्तादेव शङ्कमान इति शालीकिः ' ॥

130 7. अर्धेष्विति ॥ चतुःस्थितायामिष्टामर्धानभ्यादध्यादिति बौधायनो '' ऽत्रैव परिधयोरन्तिति शालीकिः ' ॥ २ ॥ प्रथमः ॥

130 15 विपर्यस्तहविषीति ॥ मारुतः प्रथमं मन्त्रकर्म लभेतेति बौधायनो '' ऽवदानत इति शालीकिः '' मदानत इत्यौपमन्यवश्चात्तुष्प्राश्यादित्यौपमन्यवीपुत्रः ' ॥

130 17 मारुतीभ्याꣳ होता यजतीति ॥ स ह स्माह बौधायन आदित एव होता मरुत आवाहयेदनुवाचनतो ऽध्वर्युरिति '' याज्यापुरोऽनुवाक्याभ्यामेवैतदुक्तं भवतीति शालीकिः ' ॥

31. 19 आदित्येभ्यो भुवद्वद्भ्यश्चरुं निर्वपेद्भूतिकाम इति ॥ सूचꣳ शालीकेर्'' वो ह स्माह बौधायनः सर्वाः सपदाः सर्वाः समाविद्याः सर्वाः समयूखेभ्य इति ॥

132 2 पदपाꣳसूनाꣳ हरण इति ॥ सूचꣳ शालीकेर्'' वो ह

[1] चैवाज्येन B Be

स्माह बौधायनः समस्तेनैवास्य[१] मन्त्रेण पदपाङ्क्षूत्कलोत्तर-वर्ग्यं[२] श्रावयेदथ तूष्णीमुरस्यनुनिनयेदिति ॥

I 133 16 शतं सुवर्णानि हृष्णलानि भवन्तीति ॥ सूत्रं बौधायनस्योपशतान्येवैतानि[३] स्युरिति शालीकिः परिहारयेचैषामिति[४] ॥

II. 134. 3 चत्वारिचत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्या इति ॥ स ह स्माह बौधायनो यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तद्वावगृहीतान्येव[५] तानि स्युरथेतराणि समावक्षो विभजेरन्निति चो ह स्माह शालीकिर्यान्यवत्तानि स्युर्जुहुयादेव तान्यथ यानि भक्षार्थानि स्युस्तद्वावगृहीतान्येव[५] तानि स्युरथेतराणि प्राशित्रहरण ओप्य ब्रह्मणे परिहारयेदिति ॥

II 137. 21. यः पापयक्ष्मगृहीतः स्यात्तस्मा एतमादित्यं चरुममावास्यायां निर्वपेदिति ॥ उपवसथीये ऽहन्निर्वपेदिति[६] बौधायनो यजनीये ऽहनीति[६] शालीकिः ॥

---

१ ०स्य Be C' U (sec m), ०स्मै Bu U (pr m), ०स्मिन् G B.

२ Thus (and cp. vol II, 104 2) G, ०वर्गं the other MSS

३ बौधायनस्योपशता० G U, ०नस्य बोपश० B, ०धायनस्येत्यायशान्य० Be, ०धायन्येत्यायमन्येवैतानि C', but cp. the Vic. उपशतेन तानि भवन्तीति । उपवसथीये कनानि बाधिकानि वेति ।

४ Thus the Viv (ब्रह्मणे to be understood). परिहार० the MSS.

५ Thus G, स्युस्तद्व० the other MSS.

६ Instead of ऽहन् (thus B G Bu) the other MSS. ऽहनि ।

40. 9 मांसहर्णे परिधिष्विति ॥ ऐष्टिकैः परिधाय पौरोडाशिकैः परिदध्यादिति बौधायन ॥ ऐष्टिकैरेवेति शालीकिः । ॥

40. 11. आकृतीनाᳲ होम इति ॥ सुवᳲ शालीकेरन्यो ह स्माह बौधायन औदुम्बरैः पार्श्वैरेता आकृतीर्जुहुयाद्धुत्वा चैतानि पात्राण्येवानुप्रहरेदिति । ॥

141. 1 आज्यस्यावेक्षण इति ॥ सुचं बौधायनस्य ॥ यच्चवमैक्षत्तव-नीतमभवदित्येतैरेवाज्यमवेक्षितमुत्पुनुयादिति[1] शालीकिः ।

॥ ३ ॥

42. 12 यावतो ऽश्वान्प्रतिगृह्णीयात्तावतो वारुणाᳲश्चतुष्कपालान्निर्वपेदेकातिरिक्तानिति ॥ स ह स्माह बौधायनो वैश्वानरेणैकं[2] प्रतिगृह्णीयादेवं[3] द्वौ[4] । गणं[4] तु प्रतिगृह्य कुर्वीत[5] बह्वपु[6] वारुणानेकातिरिक्तानित्यन्यो ह स्माह शालीकिर्वैश्वानरेणैकं प्रतिगृह्णीयान्न तु द्वौ[7] । गणं[7] तु प्रतिगृह्य कुर्वीत न[8] तु द्वयोर्बह्वपु वा वारुणानेकातिरिक्तानिति । ॥

---

१ उत्पुयात् again all

२ About the correct reading and the meaning of this dvandba I am uncertain; ॰णैकं B U Bu, ॰णैवैकं Be G, ॰णैकः C'.

३ एवं C' U, एव the other MSS.

४ द्वौ गणे Be B G, द्वौगुणं C', द्वागणे B, द्वौगुणं U (sec. m.)

५ MSS. exc. Be C' ins. तु. U (sec. m.) मतु ।

६ वा ins. Bu

७ U again द्वौगुणं, गणं the other MSS., गुणं C'

८ न given by Be C' U (sec. m.), not by B Bu G U (pr. m.)

II. 143 2. आभिचारे मन्त्रामन्त्र इति ॥ मन्त्रवती स्यादिति बौधायनस्यामन्त्रिकेति शालीकिः ॥

II. 143 15. पुनः समूहति समूह्यावद्यतीति ॥ सूत्रं बौधायनस्यैतैरेव मन्त्रैः प्रतिसमूह्यावद्येदिति शालीकिः ॥

II. 144 7 त्रयस्त्रिंशत्कपालं पुरोडाशं निर्वपतीति ॥ सूत्रं बौधायनस्य संदिग्धपुरोडाश एवैष स्यादिति शालीकिः ॥

II. 146, 3 (147. 17). वर्षाह्वस्तम्बस्याभिहोम इति ॥ सूत्रं बौधायनस्य यत्रैव वर्षाह्वस्तम्बः स्यात्तत्रच्छेदिति शालीकिः ॥

II. 148 4 कृष्णाजिनस्यावधवन[1] इति ॥ अन्तर्वेदि तिष्ठन्कृष्णाजिनमवधुनुयादिति बौधायनो बहिर्वेदीति शालीकिः ॥

II. 148, 6 अश्वःसवकारीयं करण इति ॥ कुर्यादिति बौधायनो न कुर्यादिति शालीकिः ॥

II. 151 1. संसर्गे[2] प्रायश्चित्तकरण इति ॥ सूत्रमाचार्ययोरन्यो ह्याहवनीयो यो नु खल्वाहवनीयो ऽत एवैष उद्धृतो भवति यामयोनिरन्वाहार्यपचनस्तंचतच[3] नास्ति प्रायश्चित्तं प्रशस्तो हि दृथाग्निसंसर्ग इति ॥

इतीन्वा[4] इमा द्वयो व्याख्याताः ॥ ४ ॥ द्वितीयः ॥

---

१ Thus G, ॰स्यावधवन U, ॰स्यावधान Bu Be C', ॰स्यायवन B, ॰स्यावधन the Viv.

२ संवर्गे B Ba G

३ सवचा Be C'.

४ इतीन्वा B C' Be.

154. 5. अभिक्रामं जुहोतीति ॥ कियति नु खल्वेतदक्रं भवतीति ॥ पञ्च प्रयाजा इति बौधायनो ॥ यत्प्राक् शालाया इति शालीकिः[1] ॥

55. 16. यदि पशोरवदानं नश्येदाज्यस्य प्रत्याख्यायमवद्येदिति ॥ स ह स्माह बौधायनो यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य[1] प्रत्याख्यायमिष्ट्वा तत्कृत्वा[2] पुनर्यजेतेत्य[3]थो ह स्माह शालीकिर्यदि पशोरवदानं नश्येद्यद्येकं यदि द्वे आज्यस्य[1] प्रत्याख्यायमिष्ट्वा तत्कृत्वा[3] कृतमेव मन्येताथ यदि भूयो ऽथैवं कुर्यादिति[1] ॥

57 2 १० सञ्चव इति ॥ यत्र क्वच नाव्या[4] वा[4] नदी[4] स्यादन्तरेणोदयच्चावती[5] वासञ्चवस्तत्रेति बौधायनो ॥ यत्र क्वचन शब्दा न सङ्गच्छेरन्नसञ्चवस्तत्रेति शालीकि॥[6] र्यत्र क्वचनान्तरेणेयादसञ्चवस्तत्रेत्यौपमन्यवः[6] ॥ प्रत्ययोरेव जनपदयोरसङ्-

१ Some of the MSS आज्यस्यैव ।

२ स ins B.

३ After कृत्वा G B ins. न पुनर्यजेत (or •तेति), but cp infra XXIII. 8

४ Thus G B (नाया नार्या the *Viv.*), नाव्याया नदीव Bu U (pr. m.); नाव्यवायामदी U (sec m), नाव्यवायां नदी *C'*; नाव्यायाया नदी *Be*

५ Thus G and B (the latter only •ति); •रेणोदपचमावति Bu U, •रेणोद त्यती Be C' (pr. m.), •रेणोदापवती C' (sec m.) The Vivaraṇa: उदकयच्चस्यो (?) भावः यस्यो पादः । उदकपादवती ।

६ Thus B G Bu U (pr. m.), क्वचनोदकसंतरेणेयाद• U (sec. m.), क्वचनोदकसंतरेणेयाद• C', •नोदकसंतरेणेयाद• Be; but in the Vivarana *there is no mention made of water*; परस्परमकस्मायमपरा गच्छेदिति ।

सत्रस्तनेत्यौपमन्यवीपुत्रो ॥ नाविद्दिपाणयोः सर्वत्रो विद्यत इति छागलेयब्राह्मणं[1] भवतीत्याश्नीगविः । ॥

II. 157. 3 अभिभूतीनां होम इति ॥ आध्वरा कृत्वा माश्वायणिका[2] जुहुयादिति बौधायनः ॥ माश्वायणिका[2] एवेति शालीकिः । ॥

II. 162. 16 दीर्घसत्त्रेष्विति ॥ सूत्रं शालीकेर्ब्रो ह स्माह बौधायनो याभ्यामेतदृग्भ्यां[3] पूतभृदाधवनीययोर्जुहुयात्ताभ्यां[4] षष्ठेषष्ठे जुहुयादथ तूष्णीं सर्वत्रावमवनयेदिति । ॥

II. 167. 6 नित्ये ग्रहणे वैष्णवीमृचमनुवर्तयतीति ॥ सूत्रं बौधायनस्य ॥ पृषदाज्य एवैषानुवर्तयितव्या भवतीति शालीकिः । ॥

II. 169. 5 स उक्थ्यमुक्थ्यं चैव प्रतिगीर्याक्थ्यशा इत्याह सवनंसवनं वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः । ॥

II. 171. 8 (172. 16) पृष्ठ्यग्रहाणां ग्रहण इति ॥ सूत्रं शालीकेर्ब्रो ह स्माह बौधायनो यत्र कर्वैतान्यहानि संगच्छेयुर्गृह्णीयादेव तत्र पृष्ठ्यग्रहानिति ॥ संवत्सर एवैते दृष्टा भवन्ति । संवत्सर एवैनाः गृह्णीयादित्यौपमन्यवः[5] । ॥

---

१ Thus B G Be C'. ॰लदंब्रा॰ Ba. ॰लेयाब्रा॰ U (pr m.), ॰लया॰ U (sec m ), ॰लेयिब्रा॰ the Viraraṇa

२ माश्वा॰ the MSS

३ Thus (and cp infra p. 157, 8) G Ba U (pr. m.), ॰भ्यामेवम॰ Be U (sec m ). ॰भ्यामेवमद॰ B यथामेवम॰ C'.

४ पूतभृताधवनीयेषु॰ U (sec. m.). पूतभृदाधवनीयेजु॰ G B U (pr. m )

५ ॰वैतमद॰ all.

71. 16 पृष्ठ्यग्रहाणां भक्षण इति ॥ स ह स्माह बौधायनो ऽनुसवनभक्षेण[1] चैवैतान्भक्षयेन्नित्येन चेति[2] नित्येनैवेति शालीकिः[3] ॥

173 7 अङ्शूनां प्रवृह्णण[2] इति ॥ एकैकशः प्रवृहेदिति[3] बौधायनः[4] सर्वान्प्रवृहेति शालीकिः[3] ॥ ५ ॥

73 12. आधवन[4] इति ॥ अतिचारमाधुनुयादिति बौधायनो[5] यथाधवित्रमिति शालीकिर्मैत्रयेदित्यौपमन्यवः[6] ॥

174. 9. अङ्शोर्होम इति ॥ सूत्रं शालीकेर्[7]वो ह स्माह बौधायनो याभ्यामेतदृग्भ्यामुपस्पृशेत्ताभ्यामेनं जुहुयादथ तूष्णीमुपस्पृशेदिति[3] ॥

175 1 पृश्नियग्रहाणां ग्रहण इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

76. 13. तेन कवचमुपोपतीति ॥ सूत्रं बौधायनस्यौपूपेनैवाप्यत्र कवचमुपोपेदिति शालीकिः[3] ॥

76. 16. ऋषभो गोषु जीर्यतीति ॥ सूत्रङ् शालीकेर्[7]वो ह स्माह बौधायनो यमयन्यं वशिमन्यात्पशुमालभेत तत्राप्येतानि कुर्यादुपाकरणीययोर्वपायां देवतास्विति[3] ॥

---

१ नुसवनभक्षेण B G U (pr m); नुसवनभक्षण Bu, नुसवनभक्षणेनैवैता॰ U (sec. m.) C'; Be corrupt

२ Thus (cp XIV, 12 173 7) B Bu G and the Viv., प्रवृंह्ण Be, प्रवृह्ण U C'.

३ प्रवृहे॰ or प्रवृहेत्॰ the MSS exc. G

४ श्रधावन Bu.

II 178.9 अष्टापद्यै गर्भस्य वसाहोम इति ॥ सूत्रं बौधायनस्य " न गर्भस्य वसाहोमं जुहुयादिति शालीकि" र्न च गर्भस्य वसाहोमं जुहुयान्नेडां न स्विष्टकृतमित्यौपमन्यवः ' ॥ ६ ॥ तृतीयः ॥

II 179.9. अजवशाया उपाकरण इति ॥ सूत्रं बौधायनस्य " वायव्ययैवैनामुपाकुर्यादिति शालीकि" र्नो ह स्माह ज्यायान्कात्यायनो यथाप्युपाकरण उपाकरणं नुदत एवमेवाप्युत्तरे मन्त्रा नुदेरन्निति ' ॥

II. 180.5 यदालब्धायामभ्रो भवतीति ॥ स ह स्माह बौधायनो यद्यहान्तश्रिता[१] अकृष्णा मेघाः स्युः संस्थापयेदथ चेत्कृष्णाः स्युरथैवं कुर्यादित्य" नो ह स्माह शालीकिर्यद्यह नादित्यमन्तर्दध्युः[२] संस्थापयेदेवाथ चेदेनमन्तर्दध्युरथैवं[३] कुर्यादिति " नालब्धायामसंस्थापनं[४] विद्यत इति गौतमः ' ॥

II. 180.17. जयेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः " ॥

II. 181. 15, 16. अभ्यातानेष्विति ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्यो नो ह स्माहौपमन्यवो ऽभ्यातानान्जयानाष्ट्रभृत इति सुवाहुतीरेवैता जुहुयान्कृच्छ्रेषु दर्शपूर्णमासावभ्यातानान्जयान्राष्ट्रभृत इति ' ॥

---

१ ? यद्यहान्ताश्रिता Be C', यद्यहान्तश्रिता B G U, यदिहान्तश्रिता Bu

२ Thus U, यद्यहर्नादित्य B G Be C', यद्यहवादित्य॰ Bu

३ Thus Be C' U (sec. m.); एनम् om. B Bu G U (pr. m.), ॰चैवंमकुर्य॰ C'.

४ नलब्धा॰ G U.— ॰थासंस्थापनं Bu, but the Viv. has असंस्थापनम् ।

182, 2. ग्रम्यापरिधिष्विति[1] ॥ ग्रम्येव ग्रम्यापरिधीन्कुर्यादिति[2] बौधायनः ″ प्राकृता एवैताः[3] स्युरिति शालीकिः ' ॥

182, 7 द्विःस्वाहाकारं राष्ट्रभृतो जुहोतीति ॥ विग्राहं जुहुयादिति बौधायन ″ द्वे द्वे सुवाहुती इति शालीकिः ' ॥

II, 182, 11 sqq. अधिदेवने जुहोति रथमुखे जुहोति रथनाभ्यां[4] जुहोतीति ॥ सूत्रं बौधायनस्य ″ तदग्नीन्येवैतानि[5] स्युरिति शालीकिः ' ॥

183, 15. नैयग्रोध औदुम्बर आश्वत्थः ग्राच इतीध्मो भवतीति ॥ सूत्रं बौधायनस्य ″ पृथगेवैतानीध्मान्यभ्यज्य पृथगभ्यादध्यादिति शालीकिः ' ॥

184, 2 १० यदाचः क्रूरं तेन वषट्करोतीति ॥ सूत्रं शालीकेर्″ चो ह स्माह बौधायन उदश्वित्यारमिश्रमर्कपर्णेन[6] सह[7] जुहुयात्स्वाहेति वा कडिति वा वषट्कुर्यादिति ' ॥

---

१ Thus Bu C′ and the Viv., ग्रम्याः प॰ the other MSS.

२ Conjecturally (Viv.: ग्रमीदृशस्य ग्रम्याकाराः); ग्रम्यायै ग्रम्यान्परि॰ B G U, ग्रम्ययैव ग्रम्यान्परि॰ Bu, ग्रम्याधै परि॰ Be C′.

३ एवैमा all.

४ नाभ्यां Bu U C′.

५ Thus C′ U (sec. m.), ॰तदपित्येव Be; ॰तदन्यैवै॰ B Bu G U (pr. m.). The Viv.: एव (r. एत) दग्नीन्ये (r. न्ये) व । एतेष्वेव होमाः । नान्यत्रित्यभवन्तीति ।

६ Emended, उदश्वित्न्या॰ Be, उदश्विदमत्या॰ C′, दुदश्वमत्या॰ B G, दश्वितया॰ Bu, उरिश्वदत्या॰ U.

७ om. Be C′.

II. 187, 8. प्रसव इति ॥ स ह स्माह बौधायन उभयेन प्रसौयादाग्निष्ठीयाभिस् सावित्रेण चेति " सावित्रेणैवेति शालीकिः ' ॥ ७ ॥

II. 187. 16 sqq. अतिकामेष्विति[1] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

II. 188. 10 sqq अतीमोचेष्विति[2] ॥ पूर्वः कल्पः शालीकेरुत्तरो बौधायनस्य ॥

II. 191. 2. प्राणपहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य " संवत्सर एवैते दृष्टा भवन्ति ' संवत्सर एवैनान्गृह्णीयादिति शालीकिः ' ॥

II 192. 10 तां दुग्ध्वा ब्राह्मणाय दद्याद्यस्यान्नं नाद्यादिति ॥ सूत्रं शालीकेर्"नो ह स्माह बौधायनः प्राक् चेदिजिज्ञासायै[3] निषीदेद्यथैवं कुर्यादिति ' ॥

II. 195. 3. यस्याहवनीयेऽनुद्राते गार्हपत्य उद्रायेदिति ॥ सूत्रं शालीकेर्"नो ह स्माह बौधायनः समस्तमेतमग्निं सते समुप्य दक्षिणेन विहारं पर्याहृत्य गार्हपत्यस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय ज्वलन्तमाहवनीयमुद्धृत्याहवनीयस्यायतनाद्भस्मोद्वाप्य शकृत्पिण्डेन परिलिप्य न्युप्योपसमाधाय समिद्धत्याहवनीये षट् स्रुवाहुतीर्जुहुयाद्दुग्धस्याग्ने

---

१ Thus G (sec m.) and the Vir ; •क्रमे• the other MSS. Vol. II. 187. 15 is to be corrected इतिक्रामाथा• ।

२ •अतौ• Be C' and the Vir, •अति• the other MSS.

३ Thus B G and the Vir., प्राक्चेदृश्नमासायै Bu, प्राक्चेदिम्नमासायै C', प्राक्षमिम्नासचै U.

त्वमग्ने सप्रथा असि मनो ज्योतिर्जुषतां तन्तुं तन्वन्नुद त्वं चित्रमिति[1] ॥

I. 196. 2 sqq. अतिरिक्तसोमेष्विति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

198 1.५ ध्रुवे परिहीणे प्रायश्चित्तकरण इति ॥ स ह स्माह बौधायनः प्राक् चेदवभृथाच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा पुनर्यजेतेत्यथो ह स्माह शालीकिः प्राक् चेदवभृथाच्छन्दोगबह्वृचेषु लभेरन्नभ्यावर्तयेयु स्तुतशस्त्राणि स्युस्तत्कृत्वा कृतमेव मन्येतेति[1] ॥

199 6.१० अङ्कां ग्रहण इति ॥ सूत्रं बौधायनस्य "यदेवानन्तरमहः स्यात्तस्मिन्मैत्रावरुणायाग्रहाग्रहीरन्निति शालीकिः[1] ॥

200. 3. यूपे विरूढे प्रायश्चित्तकरण इति ॥ सूत्रं बौधायनस्यो-त्सन्नमेव यूपे विरूढे प्रायश्चित्तं कुर्यादिति शालीकिः[1] ॥

201. 11. यस्य सोम उपदस्येत्सुवर्णं हिरण्यं द्वेधा विच्छिद्यर्जीषे ऽन्यदाधुनुयाज्जुहुयादन्यदिति ॥ सूत्रं बौधायनस्य "सहि-रण्या एवासात ऊर्ध्वं मुख्याश्चमसा जुहुयेरन्नभुनीयेरन्निति[1] शालीकिः[1] ॥

201. 19. आदारसोमेष्विति ॥ सूत्रं बौधायनस्यादारसोमेनैवाप्न्यमागमयेरन्निति[2] शालीकिः[1] ॥

---

१ Corrected; सुचिरन्निति B G Bu U (pr. m.), •सुपनीरन्निति or •रन्निति Be C' U (sec. m.).

२ Thus B G; •नवाप्यमाग• Bu, नैवाप्योप्यमाग• Be C' U (sec m).

II. 203. 1 आशिःष्विति ॥[1] आशिषो ऽनुवर्तेरन्निति बौधायन एता[2] एवाशिषः स्युरिति शालीकिः ' ॥ ८ ॥ चतुर्थः ॥

II. 245. 1 sqq अथातो द्वादशाहं व्याख्यास्यामः ॥

II. 247. 1 चिन्वीत द्वादशाहे ऽग्निमिति बौधायनो ' न चिन्वीतेति शालीकिः ' ॥

अतिग्राह्य[3] इति ॥ स ह स्माह बौधायनो गृहपतिरेवारण्योः[4] समारोपयेदेतदतिग्राह्यस्य रूपं भवतीत्यथो ह स्माह शालीकिः पृथगेवारणीषु समारोपयेरन्गृहपतेरेव प्रथमस्य मथित्वा ज्वलत्सु ज्वलतो ऽपि[5] विसृजेरन्नित्येतदतिग्राह्यस्य[5] रूपं भवतीति ' ॥

II. 245. 7. संनिवाप[6] इति । स ह स्माह बौधायनः संनिवप्स्यन्तो ऽग्नये ब्रह्मण्वते पुरोडाशमष्टाकपालं निर्वपेयुरग्नये चत्रवते ऽग्नये चत्रभृत इत्यथो ह स्माह शालीकिरग्निसंयोजनी[7] खल्वेपेष्टिर्भ-

---

१ Before आशिषो U has (rightly?) आशीष्वेव (l. ? आशिःष्वेव,) C' reads; आशीष्वेवाशीष्वित्याशिषो।

२ Thus B U C', the Vir.; एत the other MSS

३ Thus U (sec m.) and C' originally, अतिग्राह्य the other MSS.

४ Thus G B, गृहपतेरेव॰ Bu Be C', गृहपतिना॰ U.

५ Thus B Bu G, ॰तोनिसृ॰ Be, ज्वलत्सुज्वलतोपिनिसृ॰ U (sec m).

६ Thus B G and cp. XXVI 12, संनिवापम U (sec m.) C' Be, संनिधाय Bu.

७ Thus B Be; ॰योजना Bu G U C'.

वति ' यत्रैवाग्निं चेष्यमाणः स्यात्तत्रैनां निर्वपेदिति " प्राजापत्यं[1] पशुपुरोडाशमनुवर्तयेतेत्यौपमन्यवः[2] ' ॥

11. पत्नन इति ॥ एकैकश एवैनान्पवयित्वैकैकश उदानयेयुरिति बौधायनः " सकृदेवैनान्पवयित्वैकैकश उदानयेयुरिति शालीकिः " सकृदेवैनान्पवयित्वा सर्वान्सहोदानयेयुरित्यौपमन्यवः ' ।

6. आर्षेयवरण इति ॥ स ह स्माह बौधायनो ये केचन समानगोत्रा अव्यवेता अन्यथागोत्राः[3] स्युरेकस्यार्षेयस्य[4] वरण[4] एव तेषां वरणं स्यादित्यथो ह स्माह शालीकिर्यदि चैव व्यवेता यदि[5] चाव्यवेताः[5] समानगोत्रा एकस्यार्षेयवरण[6] एव तेषां वरणं स्यादिति ' ॥

13 शतधुक्ष्विति ॥ समानश्च समावच्छो विभजेरन्निति बौधायनः " पृथगेवैषां[7] शतदुघः स्युरिति शालीकिः ' ॥

---

१ प्राजापत्यस्य the MSS

२ Thus U (sec. m.), ॰नुवर्तंतेत्यौ॰ B G U Be, ॰नुनिर्वेवेत्यौ॰ C', ॰नुवर्तेतयौ॰ Bu.

३ ? अन्यथाग्वौत्रा Be, अन्यथोद्गोत्रा C', अन्यथाद्गोरात्रा Bu, अन्यथा अद्गोरात्रा U, अन्येष अगोत्रा G B, अन्यायागोत्रा the Viv. (one copy), अन्यथासगोत्राः (another copy)

४ स्युरेक आर्षेयस्यवरण C', स्युरेक आर्षेयस्य समानगोत्रा एकार्षेयं वरण Be

५ Only in C' B and U (sec. m.).

६ ॰र्षेयंवरण or वरण U Be C'. On the whole difficult passage cp. Āp. XXI. 3. 4.

७ एव om. G and the Viv.

II. 247. 1. पश्चात्सुपसद्युत्तरवेदिः संनिवपन्तीति सूत्रमाचार्ययोरपि[१] वैकादशमिति विधिः[२] ।[1] ॥

II. 247. 7. वसतीवरीणामभिग्रहणं[३] इति ॥ सूत्रं शालीकेर्बौ ह स्माह बौधायनो यदि मातिरेपः कलशः स्यात्पूर्णमवनयेद्यद्यु वै सर्वश एव लेपः समवनीतः स्याद्येवं[४] कुर्यादिति शालीकिः ।[1] ॥

II. 247. 12. सो ऽन्त[५] वैव[५] यज्ञस्य पुनराख्यं जपति यज्ञायज्ञीयस्य वा स्तोत्रे शंयुवाके वेति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकिः ।[1] ॥

II. 248. 1. विवर्तयन्ति परिधीननुप्रहरति[६] प्रस्तरमिति ॥ सूत्रं बौधायनस्यानुप्रहरेदेवाच प्रस्तरपरिधीनिति शालीकिः ।[1] ॥ ६ ॥

II. 248. 5. निर्मोक्याध्वर्युरुपांश्वद्[७] जुहोतीति । सूत्रं बौधायनस्योन्वीक्षमाण एव जुहुयादिति शालीकिः ।[1] ॥

---

१ Before अपि Be ins. अधोवराकोपमन्यवो, C' अवो॰ वो, U अधोवराद बौधायनो। cp XXVI. 12

२ Thus B G; ॰मिति बाधिः Bu; मिति नासिः U, ॰मिवक्लं Be C'.

३ Thus the Viv and cp. XXVI. 12; ॰मदिपदय Be C', ॰मिति प्रदय the other MSS.

४ Thus Be G, ॰दयैव C', ॰दयैवं Bu B U

५ Thus B U G Bu the Viv (one copy); चैव Be C' the Viv (another copy).

६ ॰हरति *Be G Bu U*; ॰हरंति *Be C'*.

७ Read ॰पांश्वं?

18. 1 शिल्पैरुपाकरण इति ॥ स ह स्माह बौधायन उभयैनोपाकुर्याद्धर्हिर्भ्यां च शिल्पैश्चेति " शिल्पैरेवेति शालीकिः ' ॥

18 15. न्यूङ्खन इति ॥ विराजा[1] वा प्रतिपत्सु न्यूङ्खयति[2] शस्त्रे[3] वेति[3] ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

19 4 निर्मन्थ्यस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू"ष्णीक इति शालीकिः ' ॥

दाक्षिणानां होम इति ॥ स ह स्माह बौधायनो जुहुयादेवाहुतीर्जपेत्प्रत्ययमन्त्रानित्य"थो ह स्माह शालीकिर्जुहुयादेवाहुतीर्न तु[4] प्रत्ययमन्त्राञ्जपेदिति " ये केच दक्षिणायुक्ता मन्त्राः स्युर्नैवैनानाद्रियेतेत्यौपमन्यवः ' ॥ १० ॥

पञ्चमः ॥

52. 6 अविवाक्य इति ॥ अविवाक्यमेतदहर्भवतीति बौधायनो " विब्रूयादेवेति[5] शालीकिः ' ॥

52. 11 ऋचामुद्धरण इति ॥ सूत्रं बौधायनस्य " यथाप्रकृतिमेवाध्वर्युः कुर्याच्छन्दोगबह्वृचा एव प्रतिकुर्वीरन्निति[6] शालीकिः ' ॥

---

१ विराजां G C', विराजा Bo Bu, विरजां U, विषजां B

२ ॰यंति all exc C'.

३ शस्त्रैर्वेति all.

४ Found in Bo C' U G (sec. m.), the other MSS. om

५ Thus corrected, निब्रू॰ B G, निव्रू॰ Bu, शुब्रू॰ Bo C' U (sec. m ), निर्ब्रू॰ U (pr. m.)

६ प्रतिविकु॰ B G U (pr. m )

.255.13 सर्पण इति ॥ कृष्णाजिनान्तैः सर्पन्त उत्तरं हविर्धानमुपस्पृशेयुरिति बौधायनो ' नोपस्पृशेयुरिति शालीकिः ' ॥

.257. 597 आग्रयणाग्रेष्विति ॥ वाचंयमो ऽध्वर्युः पूर्वान्ग्रहस्थान् गृह्णीयादिति[1] बौधायनो " विसृष्टवागिति शालीकिः ' ॥

स[2] शुक्रं गृहीत्वा धारयति यावदितरौ ग्रहौ गृह्णातीति ॥ सूत्रं बौधायनस्य " यं यं गृह्णीयात्तं तं परिमृज्य सादयेदिति शालीकिः ' ॥

ग्रहाधानेष्वनुसंव्रज्याया[3] इति ॥ अनुसंव्रजेदिति बौधायनो " नानुसंव्रजेदिति शालीकिः ' ॥

II 258 1. पशुकल्पेष्विति ॥ सर्वे कल्पा बौधायनस्यै"न्द्राग्नपशून्येवाहीनरात्रिसत्त्राणि भवन्तीति शालीकिः ' ॥

II. 261. 2. तेषां यानि समहाव्रतानि तानि साग्निचित्यान्यथेतराण्यौत्तरवेदिकानि स्युरिति बौधायन " ऐकाहिकस्त्वेवाग्निरिति शालीकिः ' ॥

II. 262. 12 आशौचेष्विति[4] ॥ अभिजिदिषुवान्विश्वजिद्गमनमहर्महा-

---

१ ग्रहस्थानान्गृ॰ B

२ स given only by U (sec. m) C' and the Vir.

३ Thus B G (sec. m) C' (sec. m) U; सायोजनाधानेषु॰ Be, ग्रहध्यानेषु॰ Bu; the Vir. ग्रहा आधीयन्ते इष्विति।

४ Thus (heteroclitic locative? from आशौचवत्) Be C' U (cp Āp. XXIII, 9. 6 आप्यति); आशौचेष्विति B G the Vir; आशौचे ष्विति Bu.

मतमित्येतान्याचीयन्ति[१]भवन्तीति बौधायनो॥ यान्यन्यानि पृष्ठ्याभिप्लवेभ्य इति शालीकिर्यानि चान्यानि पृष्ठ्याभिप्लवेभ्यो दशमाच्चाह्न इत्यौपमन्यवः॥ प्रायणीयारम्भणीयावभिजिद्विषुवान्विश्वजिद्दशममहर्महाव्रतमुदयनीयो ऽतिरात्र इत्येतान्यग्रावाचीयन्ति[२] भवन्तीति गौतमः। ॥

35. 5. पशुकल्पेष्विति ॥ सर्वे कल्पा बौधायनस्यै॥कादशिनपशून्येव सांवत्सरिकाणि सत्त्राणि भवन्तीति शालीकिः। ॥

36. 9 वालः शततन्तुर्भवतीति ॥ सूत्रं बौधायनस्य॥ वौणैवैषा[३] तन्त्रीभिः[४] शततमा[५] स्यादिति शालीकिः। ॥

अहर्गणे माहाव्रतिकानाम्[६]शिल्पानां करण इति ॥ कुर्यादिति बौधायनो॥ न कुर्यादिति शालीकिः। ॥

अहर्गणे शिखानामनुप्रवपण इति ॥ अनुप्रवपेरन्निति बौधायनो॥ नानुप्रवपेरन्निति शालीकिः। ॥ ११ ॥ षष्ठः ॥

---

१ •तान्यचीयंती Bu, •तान्याचीयानि B G, the other MSS wholly corrupt, cp XXVI 17

२ •ह्रावचियंति U. •ग्रावचीया Be, •ग्रावचीय C', •ग्रावचीयानि B G, •ग्रावाचियेती Bu

३ वार्णैवैषा C', वौणेवैषां Be, U (sec. m.), वौर्णैवैषां G, वौर्णवैषां Bu B, वौर्णैवैषा U (pr m)

४ Thus G U C'; तंत्राभिः Bu, त्रौभिः Be, तंत्र भिः B.

५ Uncertain; शततमा B Bu G U (pr m) C' (sec. m.), शततंतु Be U (sec. m), शततुर C' (pr m.)

६ Thus B G Be, महा॰ or मह॰ Bu U C' and the Viv.

II 277, 14. दशरात्राय दीक्षिष्यमाणो दशहोतारꣳ हुत्वा दशरात्राय दीक्षत इति ॥ सूत्रं बौधायनस्य" सप्तहोतारꣳ हुत्वा दशहोतारं जुहुयादिति शालीकिः" ॥ इति नु ब्राह्मणवान् ॥

अथ गोवत्सदशरात्रो ऽतिरात्रः पृष्ठ्यः षडहो वाजपेयो महाव्रतं चातिरात्रस्त्वष्टमे ऽह्नि वाजपेयः[१] ॥ तत्र देवसुवाꣳ हविषां करण इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिस्तु" यस्मिꣳस्य पशुपुरोडाशमनुवर्तेरन्नित्यौपमन्यवः[२] ॥

विलुप्यमाने पृष्ठ्ये षडहे शिल्पानां करण इति ॥ कुर्यादिति बौधायनो" न कुर्यादिति शालीकिः' ॥

I. 281 16 एकषष्टिरात्रे वैश्वकर्मणादित्ययोर्ग्रहण[३] इति ॥ उत्तरे त्रिꣳशद्रात्रे गृह्णीयादिति बौधायनः" संवत्सर एवैतौ दृष्टौ भवतः' संवत्सर एवैनौ गृह्णीयादिति शालीकिः' ॥

I. 283 2 औदुम्बरꣳ षोडशिपात्रमिति ॥ सूत्रं बौधायनस्य" खादिरमेवेति शालीकिः' ॥

II. 283, 15 अतिरात्रपशूनामुपाकरण इति ॥ सूत्रं बौधायनस्य" सारस्वतीमेवोपाकुर्यादिति शालीकिः' ॥

---

१ Thus U C'; •चाष्टमो भवतीति वाजपेयस्तच Bu; चाष्टमेनाजपेयस्तव B G Be

२ •पशु• om. B Be G

३ Thus G U C' and the Vrr , •वादित्यग्रहयोर्ग्रहण B Bu; •णोदित्ययो-र्ग्रहण Be

षोडशिवतां चमसानां भक्षा इति ॥ व्यक्तान्भक्षयेदिति[1] बौधायन" इन्द्रपीतानिति शालीकिः[1] ॥

रात्रिपर्यायेषु मुख्यानां चमसानामभिमर्शन इति ॥ सूत्रं शालीकेर्"वो ह स्माह बौधायन इन्द्राय त्वापिशर्वरायेत्येव मुख्यंमुख्यं चमसमभिमृशेदिति[1] ॥

11. आश्विनस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्य"श्लोक इति शालीकिः[1] ॥

6 आश्विनस्य चर्याया इति ॥ सूत्रं शालीकेर्"वो ह स्माह बौधायनः पुरस्तात्तिरोअह्नियानां[2] चमसानां चर्याया[3] अनुवाश्विनेन[3] चरेदिति[1] ॥

8. तिरोअह्नियानां[2] चमसानां भक्षा इति ॥ अनुष्टुप्छन्दसा भक्षयेदिति बौधायनो" जगतीच्छन्दसेति शालीकिः[1] ॥

10. गृहस्तीर्येष्विति ॥ एकादशधा छलोपयष्टोपयजेदिति बौधायनो" ऽपच्छेदमिति शालीकिः" समस्तान्येवैनान्यनुप्रहृत्य सर्वैर्मन्त्रैरनुमन्त्रयेतेत्यौपमन्यवः[1] ॥ १७ ॥ सप्तमः ॥

1 एकादशिन्ये संप्रदान इति ॥ सूत्रं शालीकेर्"वो ह

---

१ Thus Ba Bc C′ and the Viv, मुख्यकाम॰ B G U.

२ Thus Ba and Viv, ॰ह्नाानां or ॰ह्निकानां the other MSS.

३ Thus G only; चर्याया इत्यचाश्वि॰ C′ U (see m), चर्यायानुचाश्वि॰ the other MSS.; चर्याया also the Vivaraṇa

स्माह बौधायन एकादशाग्नीषोमीया एकादश मवनीया एकादशानूबन्ध्या[१] इति ' ॥

II. 292 2. उपशयस्य मन्त्रामन्त्र इति ॥ लभेत ग्रामे नारण्य इति बौधायनो " लभेतारण्ये न ग्राम इति शालीकि"र्नैव ग्रामे नारण्य इत्यौपमन्यवः ' ॥

II. 294, 16. उपशयस्योपासन इति ॥ सूत्रं बौधायनस्यै"त्रैवोत्तरत[२] उपासीतेति शालीकिः ' ॥

II. 296. 4 पालीवतस्य परिलेखन इति ॥ शालासुखीयं शङ्कुमभिपरिलिखेदिति बौधायन" उत्तरत एकादशिन्यै पालीवतं मितुयादिति शालीकिः ' ॥

II. 296. 5. त्वाष्ट्रस्य मन्त्रामन्त्र इति ॥ मन्त्रवान्स्यादिति बौधायनस्तू"ष्णीक इति शालीकिः ' ॥

II. 296. 6. त्वाष्ट्रस्योत्सर्ग इति ॥ सूत्रं शालीके"र्नो ह स्माह बौधायनो ऽभिपर्यग्निकृतमेनमन्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रमय्याग्निरस्यु[३] यजमानस्याजास्वपिसृजेदिति ' ॥

II. 296, 11 त्वाष्ट्रस्य चर्याया इति ॥ उपांशु चरेदिति बौधायन" उच्चैरिति शालीकिः ' ॥

II. 297 4. पुनस्रिताविति ॥ सूत्रं शालीके"र्नो ह स्माह बौधा-

---

१ ॰शानुबंध्या MSS

२ Thus G U and a citation in the Ms ; उत्तर the other MSS.

३ Thus B Be C' G U (sec. m ); ॰निष्क्रमय्या॰ U (pr. m.), ॰निष्क्रमर्या॰ Bu; ॰निष्क्रमय्य॰ a citation in the Ms.

यतो यमग्निं चिन्वानो ऽपजानीयात्तस्मिन्नुपरि[1] पुनश्चितिं चिनुयादुत्तरतश्च यूपाद्यूपं मिनुयादिति' ॥

99. 10. कौण्डपायिनीयास्विष्टिष्विति ॥ अग्न्यन्वाधानप्रतिपत्का इडान्ताः संतिष्ठेरन्निति बौधायन" आज्यभागप्रतिपत्का इडान्ता इति शालीकिः" सपूर्णपात्रविष्णुक्रमा इत्यौपमन्यवः' ॥

99. 11. पिण्डपितृयज्ञस्य दान इति ॥ अहरहर्दद्यादिति बौधायन" आदित अन्ततश्च मासस्येति शालीकिः' ॥ १४ ॥

301, 3 होतॄणां व्याख्यान इति ॥ सग्रहानृतेस्वाहाकारानित्येकमृतेग्रहानन्तःस्वाहाकारानित्येकम्[2]' सर्वानित्येकं ॥ पूर्वः कल्पो बौधायनस्योत्तरो शालीकेः' ॥

स पौर्णमासीषु पौर्णमासीषु शुक्लद्वादश कल्पः संवत्सरे जुहुयादित्येतदेकममावास्यापौर्णमासीष्वित्येतदेकम्' सर्वास्वित्येतदेकम् ॥ पूर्वः कल्पो बौधायनस्योत्तरो[3] शालीकेः' ॥

चयस्त्रिंशच्चिताविति[4] ॥ सूत्रं शालीकेर्"चो ह

---

१ Doubtful. G and the Viv. read as given in our text; चिन्वानोपजा° C', चिन्वानैवजा° U; चिन्वानोपजा° the other MSS. We expect an optative derived from the root ज्या, cp. ज्यामानः XVII 17: 297, 5. The Viv. periphrases by चीयेत only.

२ °अंतःस्वाहाकारा° MSS., but cp. XX. 5: 5, 5

३ उभौ ins. B Ba G (sec. m.)

४ Thus C', G U (sec. m.) the Viv. and a citation in the Ms., °त्रिंशच्चिता° B Be, °स्त्रिंशच्चिता° Bu.

स्माह बौधायनो ऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[1] सर्वमेवैतत्कर्मावृता कुर्यादिति[1] ॥

II. 303. 5. अहरहश्चितानिति ॥ सूत्रꣳ शालीकेरन्यो ह स्माह बौधायनो ऽग्निग्रहणꣳ स्वयंचितिꣳ श्वेतकृष्णयोरभिमर्शनमधिद्रवणमवद्रवणमिति[1] सर्वमेवैतत्कर्मावृता कुर्यादिति[1] ॥

II. 307. 13. रथचक्रचितौ पुरीषस्योपधान इति ॥ पुरीषस्यान्तान्कुर्यादिति[2] बौधायन॥ इष्टकास्वेव पुरीषस्यान्तं[3] गच्छेदिति[3] शालीकिः[1] ॥ १५ ॥ अष्टमः ॥

II. 310. 2 रोहिते चर्मणीति ॥ सूत्रं बौधायनस्योपरोहितꣳ स्यादिति शालीकिः[1] ॥

उभयनीतस्य करण इति ॥ उभे[4] स्रुचौ[4] द्विरभ्यावर्तयेदिति बौधायनः॥ सकृदेव ध्रुवन्द्विर्ब्रूयादिति[5] शालीकिः[1] ॥

---

१ Thus B G Be Bu and a citation in the Ms. (cp also XXII. 4: 121. 18), C′ reads °मर्शनाधिद्रवणमि°, U. om °मवद्रवण°।

२ Thus G Be; पुरीषस्यांतस्यात्कुर्या° U, पुरीषस्यनस्यांतान्कुर्या° B, पुरीषस्योमन्कुर्या° C′; Bu defective.

३ Hesitatingly corrected; पुरीषस्यान्तद्गच्छे° G, पुरीषंस्यान्तद्गच्छे° Be, पुरीषस्यान्तद्गच्छे° C′, पुरीषंस्यान्तद्गच्छे° U.

४ उभौ स्रुचौ B G, उभये स्रुचौ Be C′, उभयो स्रुचो Bu, उभये स्रुचो U (see m.) The two ṛks are, according to the Viv.: वायुः पूतः . प्राङ् सोम॰ etc., and वायुः पूत.... प्रत्यङ् सोमः etc., T Br II. 6. 2 2-3.

५ ध्रुवन om Be C′ U G (pr m.); ध्रुवन् नद्विम्° Bu

प्राङ् सोमः प्रत्यङ् सोमः ' प्रत्यङ् सोमः प्राङ् सोम[१] इति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

310. 4 sqq. सौत्रामणिकायै सुरायै संधान इति ॥ सूत्रमाचार्ययोर्" नो ह स्माहौपमन्यवो यत्रैव सुरा स्यात्तत एवाहारयेदिति ' ॥

12. 14. ५ सुराग्रहाणां ग्रहण इति ॥ सूत्रं बौधायनस्य " पयोग्रहान्पयच गृह्णीयादिति शालीकिः ' ॥

113. 4 ताम्रघनेन सुगण्डाभ्यां वोदीचो वायातयतीति ॥ पूर्वः कल्पो बौधायनस्योत्तरः शालीकेः ॥

सुरासोमस्य संचर इति ॥ दक्षिणेन ह्वलोत्तरेणावनयेदिति बौधायन " उत्तरेण ह्वला दक्षिणेनावनयेदिति शालीकि" र्यत एवैनद्‌ हरेत्तत एवैनमवनयेदित्यौपमन्यवः ' ॥

14 पावमानीभिरुपस्थान इति ॥ पावमानीभिरुपस्थाय पितॄणां याज्यानुवाक्याभिरुपतिष्ठेरन्निति बौधायनः " पितॄणामेव याज्यानुवाक्याभिर्न पावमानीभिरिति शालीकिः ' ॥

14. १५ अवभृथ इति ॥ सूत्रमाचार्ययोर्" नो ह स्माहौपमन्यवः शूलैश्च मासरेण चावभृथमवेयादिति ' ॥

आख्यातमुदकान्तस्य प्रत्यसनम्[२] ॥

आख्यातमास्रवनम्[२] ॥

10. आख्यातङ्‌ समिधां करणम् ॥

---

१ Thus G only, प्राङ् सोमः प्रत्यङ् सोमः प्राङ् सोम B, प्रत्यङ् सोम प्राङ् सोम Be C' U, प्राङ्सोम Bu.

२ See remark on XXI. 3 - 73 5, 6

इत्यपसदतो[1] भवतीत्यष्टीनदतीत्येवेदमुक्तं भवत्यथेयं दशर्षभा संवत्सरमभि विहिता[2] प्राजापत्य[3] एवैषां ककुद्दशमो भवतीति[4] कथमत्र ब्रह्मचर्यꣳ सिध्यती३ न सिध्यती३ इति सिध्यतीत्येक आहुरथ हैक आहुर्न सिध्यतीति संतिष्ठते नैव सिध्यतीति पर्यारिणी भवतीति परिहारसूरित्येक आहुरथ हैक आहुरनुजैवैषोक्ता भवति वेहदित्येतामाचक्षते ॥ ३८ ॥

सोमापौष्णं चैतमालभेतेति त्रयाणामेवैष उक्तो भवत्यथाप्युदाहरन्ति यस्मिन्सो धयतीति त्वाष्ट्रं वडवमालभेतेति यमेवैतं पुमाꣳसꣳ मन्तमधिरोहति स वडवो विषम आलभेतेति देवयजन[5] वा विषमꣳ स्याद्यस्मिन्वा पशुमालभेतापां चौषधीनां च सन्धावालभेत इत्युदकान्त इत्येक आहुरथ हैक आहुः प्रावृषि वा शरदि वेति यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सौर्यं बहुरूपमालभेतेति प्रायणीये चेदतिरात्रे न दृश्येतारम्भणीयस्याहः सवनीयस्योपालभ्यं

---

१ Uncertain, इत्यृषीनाम॰ Be, इत्युषिनाम॰ Ben C G D, इत्युषिम॰ H, इत्युष्टिनाम॰ U (pr m ), इत्युद्दष्टिनाम॰ U (sec m.). Read perhaps इत्यृषीनामधेय॰ ?

२ Thus Ben C D G (pr m ), विहिताः Be U H G (sec. m )

३ Thus Ben C U D G (pr m.), ॰पत्या Be H G (sec. m.).

४ इति only in Be.

५ Before देव॰ all the MSS exc Be ins. यद्‌ or य ।

I. 69. 2. कथमु खलु यावज्जीवप्रयुक्तानां चातुर्मास्यानामनुप्रयोगो
भवतीति । फाल्गुन्यां वा चैत्र्यां वा पौर्णमास्यां शुनासी-
रीयपरुषा यजेताथ वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्णमास-
वैमृधाभ्यां यजेताथ चेदिष्ट्या पशुना सोमेन वा यजेत कथं
तत्र कुर्यादिति । प्रतिकृष्यैतस्य पक्षस्य शुनासीरीयपरुषा
यजेताथैतेषामेकेन यजेताथ वैश्वदेवायोपवसेद्वैश्वदेवेनेष्ट्वा पौर्ण-
ib. मासवैमृधाभ्यां यजेतेति । यथो एतद्बौधायनस्य कल्पं वेद-
यन्ते यावज्जीवप्रयुक्तान्येव चातुर्मास्यानि स्युरन्तर्मिथुनानि ।
प्रथमे त्वेव संवत्सरे व्रतं चरेदिति कथमन्वेष्टिपशुबन्धा इति ।
काममिष्ट्या कामं पशुबन्धेनेति । क उ खलु चातुर्मास्यानि
समासं गच्छन्तीति । राजसूये च चातुर्मास्येषु च सोमेष्वित्येव
ब्रूयादथाप्युदाहरन्ति द्वादशाहे ऽपि चातुर्मास्यैर्यजेत । वैश्व-
देवेनेष्ट्वा[1] चतुर्थ्यां वरुणप्रघासैरष्टम्यां च[2] नवम्यां च साक-
मेधैर्द्वादश्यां शुनासीरीयपरुषा यजेतेति । विज्ञायते संव-
130. 5. त्सरप्रतिमा वै द्वादशरात्रयो भवन्तीति । त्रिवृद्बर्हिर्भवतीति ।
तूष्णीकानि हान्तराणि भवन्तीति मन्त्रवदु[3]ह[3]बाह्यमेतदेव[3]
131. 3 यदन्यत्रेष्टिसंनिपाते[3] विपरीतं भवतीति । क उ खलु कारभ-

१ Before वैश्व° D G U C ins प्रथमायां, which, strictly spoken, is superfluous

२ च om. U G D Ben C and Rudradatta on Āp. VIII. 1 2; it is found in Be H and the Vivarana

३ Thus G ; D Ben (pr. m ) U (pr. m.) C present the same reading, leaving out only ह ; U (sec. m ) Ben (sec m.) Be ins. एतदु between मन्त्रवदु and ह ; H reads as G, only °वदेवमाहदन्यत्रे° , Ben °वदेमदुदान्यमेतदुपसदन्यत्रे°, Be° °वदेदमदुदवान्यमेतदुपसदन्यत्रे° ।

पात्राणि प्रथमं मन्त्रं लभन्त इति । प्रोक्षण[1] इत्येव[1] ब्रूयात्सह हविर्भिः करम्भपात्राण्यभिपर्यग्नि कुर्यात् । किंदेवत्यानि नु खलु करम्भपात्राणि भवन्तीति । वारुणानीत्येव ब्रूयाद्विज्ञायते ऽन्यमेव[2] वरुणमवयजत इत्यस्तं प्रेत सुदानव इति गृह्याग्मेघे-
III. 72. 1. तेत्येवेदमुक्तं भवति । तौ व्यतिचारं स्तम्बयजुषी हरेयाताम्-
मितश्चामुतश्च[3] यन्तं[3] प्रतिप्रस्थाताध्वर्युं परिगृह्णीयात्सह[4] निरस्य प्रतिप्रस्थातापो निःषिच्याध्वर्योराज्यस्य[5] वाचयेदथैनयोरतिप्रणयनादादायाध्वर्युः स्वमिध्ममपक्रम्यैव तिष्ठति । ॥ १ ॥

अथायं प्रतिप्रस्थातान्तरेणेध्मं[6] चाहवनीयं चोपातीत्य स्वमिध्ममाददीत । तावपमलैः[7] पर्यावृत्येध्मौ हरेयातामथामुतः[8] प्रदक्षिणमावृत्येध्मौ प्रतिष्ठाप्येतेनैव यथेतमेत्य प्रतिनि-

---

१ Thus Be G (sec m ), the Viv ; प्रोक्षणाप्रभृतीन्येव U G (sec. m ) Ben H, प्रोक्षणप्रभृत्येव D, प्रोक्षप्रभृत्येव C.

२ Thus all, cp the Calcutta edition of TS, vol. II, p 41, l. 5 from bottom (TBr. I. 6. 5. 4 ? )

३ •श्चार्यंतं Be G U (pr. m.).

४ Thus G U (sec. m.) and the Viv. ; प्रतिस्ट• D C U (pr. m.) Be Ben ; H om the prepos , cp. Āp. VIII. 5. 12.

५ •ध्वर्युंणा• H Ben (pr. m ) —After •राज्यस्य C D Be G U (pr. m.) ins. च, U (sec. m ) चार्थं ।

६ Thus Ben H U (sec m ) and the Vivarana , •घ्मातीत्येव Be G C U (pr. m.) D

७ Thus G U C and the Viv., the other MSS. om. तौ ।

८ •परिहरेयाताम• U (sec. m.).

वेष्टयते प्रतिप्रस्थातान्तरेण वेदी प्राचीनमुपयमनीहारो[१] ।
ऽथेमा अध्वर्युः प्रोक्षण्यो दक्षिणेन प्रतिप्रस्थातारं परिगृह्या-
138. 4 मादयेदेवमेताभिरनभिपरिहृतो भवत्यथेयं[२] मारुती दक्षिणां
वेदिं गच्छति सप्तमी[३] हविषामधिश्रीयते[३] । कथमेतयाव्य-
वेतानि भवन्तीति । प्रतिक्रम्यैनामग्रेण दक्षिणेन[४] हवींष्य-
नभिघारितामुदानयेदथैनां पुनरधिश्रित्याभिघारितामुदा-
स्यान्तर्वेद्यामादयेदेवमेतान्यव्यवेतानि भवन्त्यथायं प्रतिप्रस्थाता
मारुत्यै दैवतस्य मरुद्भ्योऽनुवाचयेन्मरुद्भ्य आश्रावयेद्यान्यत्राध्वर्युः
कृतानुकारो भवतीति । तद्यदिहाश्रावयतीह[५] यजतीति
तत्प्रतिप्रस्थाता कृतानुकार एव भवत्यथेदं मारुत्यै मेक्षण-
73. 3 मग्रेणोत्तरवेदिकमग्निं[६] परिगृह्यानुप्रहरेदथो[७] एतदौपमन्यवस्य

१ Thus G U C D, °यमनिहारो the other MSS

२ इति after भवति ins D U Ben C

३ Uncertain reading and meaning, the Vivarana of this passage is missing. G (sec m) reads as given above; सप्तम्यः हविषामधिश्रि° Ben (pr m) C, सप्तम्या हविषामधिश्रि (or श्र)यते Be U (sec m) Ben (sec m) G (pr m), सप्तम्यविषधिश्रयते H

४ Instead of दक्षिणेन (thus G, Ben sec m, Be) दक्षिणा U (sec. m), दक्षिणानि C Ben (pr. m) U (pr. m.) H D.

५ Thus Ben (sec. m) G (sec m.), the last MS ins इति also after °श्रावयति) H (only °वयतिह) and the Viv. (reading यदी°) ; तद्यदाश्रा° Ben (sec m), तद्यदाश्रावयतीह Be, तद्यदिहाश्रावयतीति तत्-प्रतिप्रस्था° C.

६ °ग्रेणोत्तर° Be H.

७ पर्याहृत्यानु° U (sec. m)

कल्पं वेदयन्ते तुषैश्च निष्कासेन चावभृथमवेयादिति दैवतं
प्रदाय स्विष्टकृतं प्रयच्छेत्तुषान्संप्रकीर्यादुकान्तं प्रत्यस्येत्स्विष्टकृमत
I. 141. 18. ऊर्ध्वमथायं गृहमेधीय आज्यभागप्रतिपत्क्वेडान्तः[1] संतिष्ठते '
III. 74 10. तत्र नास्ति प्राशित्रं ' तूष्णीꣳ [2]समक्ताञ्छाकलान्परिधीनग्ना-
I 143 18. वनुप्रहरेदभिवान्यायामविद्यमानायाꣳ संधिनीचीरं दोहये-
दिति ' ॥ २ ॥ प्रथमः ॥

I. 143. 17. अथायं महापितृयज्ञस्तस्य कः कर्मण उपक्रमो भवतीति '
बर्हिर्यजुषा कुर्याद्देवानां पितॄणां परिपूतमसि देवपितृबर्हिर्मा
त्वान्वक्ष्मा तिरश्चपर्व ते राध्यासमित्यपहतो ऽररुः पृथिव्यै देव-
पितृयजन्या इत्यपहतो ऽररुः पृथिव्या अदेवपितृयजन इत्येव-
मेतेष्वधिकरणेषु कुर्याद्यत्र देवाश्च पितरश्च संनिगच्छेयुः '
पाणी संमृशीत ' परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसाद्यै-
द्ब्रह्माणं दक्षिणत उपवेश्याचैवोत्तरत उदपात्रं निधाय जघनेन
गार्हपत्यꣳ स्फ्यं निदध्यात्स्फ्योपरि[3] प्राचीं ' प्राच्यां व्रीहीना-
वपेच्छूर्पादानप्रभृति कर्मान्तस्तायत आध्यान्तो ' जघनेन
I. 147. 4 गार्हपत्यमाथेभ्यो निनयेद्दिपरिक्रामन्त्येत ऋत्विजो ' ऽध्वर्यु-
रनन्तरो ऽग्नेः स्यादथ यजमानो ऽथ ब्रह्माथाग्नीध्रो ' ऽपि

---

[1] Thus G U D Ben C, •स्केडान Be, •स्कंडांता H; read •प्रतिपत्क्ष्वेडान्तः ?

[2] Thus (and cp. XXI. 3 · 74 10) Ben U H, •शकला• D C, •शालाका• G (sec. m.) Be

[3] निधाय instead of निदध्यात् Ben U (sec. m.).

वाग्नीध्र एवानन्तरो ऽग्नेः स्यादथ यजमानो ऽथ ब्रह्माथाध्वर्यु-
9b विपरिहरन्ति हवीꣳष्यग्रेण पुरोडाशं धाना जघनेन धानाः
करम्भमित्येवं विपरिहृतानामेवैतेषाꣳ हविषामेकैकमुद्वास
येत् । क्व उ खलु त्रैयम्बका निरुप्यन्त इत्युदास्य हवीꣳषि
रुद्रायाम्बिकायै जुष्टं निर्वपामीति यस्य मन्त्रवन्तः । कायेति
कायं निर्वपेत्कायानुब्रूहीत्यनुब्रूयात्कं यजेति यजेत्क्व उ खलु
53 1 त्रैयम्बकाणाꣳ सौविष्टकृतं भवतीति । यदेवातो भूत आस-
जतीत्यसमुदित ऋषभं ददातीति[1] । महाहविषामेवैषो ऽसमु-
दिते[2] दातव्यो भवति । सर्वमेव याजमानं पितृयज्ञ उक्तो-
देत्पशुबन्धे सौम्ये ऽध्वरे ऽन्यत्रतत्रोत्पत्तिवचनात्सर्व[3] एवाग्नि-
र्याजमानो ऽग्निचये सर्वमेवाग्न्याधेयच्छन्दो[4] याजमानमग्न्या-
धेये । ॥ ३ ॥ द्वितीयः ॥

56 1 अग्निष्टोमेन यक्ष्यमाणः प्रज्ञमात्मानं कुर्वीत । येनास्या-
कुशलꣳ[5] स्यात्तेन कुशलं कुर्वीत । यान्यृणान्युत्थितकालानि
स्युस्तानि व्यवहरेदनुज्ञापयीत वा । स पुरस्तादेवोपकल्पयते

---

१ इति om Ben H

२ Emended; समुदितो MSS.

३ Thus U Ben C D H; न्यत्रतोत्पत्ति॰ G and the Viv, न्यत्रतोत्पत्ति॰ Be

४ Thus G U (sec. m) and the Viv.; ॰धेयंच्छन्दसो H Ben D C, ॰धेयच्छन्दसो Be.

५ Thus (and cp XXIV. 12. 195 8) Be D U C, ॰स्याऽकुशलं G. ॰स्याकुशलं Ben H

I 156. 6 प्रभूतं दशवर्षं पश्चान्यं स्यान्यमन्नं कुम्बं च कुरीरं चेति । विदलमु ह कुम्बं भवति जालमु कुरीरं । द्वादशशतं दक्षिणानां । विज्ञायते छन्दोगब्राह्मणं वीरहा वा एष देवानां यः सोममभिषुणोतीति । शतेन वीरं निरवदयते । दशभिर्दश प्राणान्येकादशी तयात्मानं । यैव द्वादशी सा दक्षिणेत्यथ[1] । हैक एकविंशतिदक्षिणेन यजन्त एकविंशं यज्ञायज्ञिय-मिति वदन्तो । ऽथ हैके सप्तगुना यजन्ते सोमक्रयण्यातिथि-मत्यनूबन्ध्यास्वतस्तो[2] मध्यतस्तदपि दाशतये[3] विज्ञायते प्र सप्त-गुमृतधीतिं सुमेधामिति । ॥ ४ ॥

156. 9 अथातो देवयजनकल्पः । स एतद्देवयजनकल्पं जोषयते १ पुरस्तादुदकमनूषरमनुपहितमविस्रग्दार्यनिरिणमसुषिरमभङ्गु-रमवल्मीकं[4] बहुलौषधि[4] यत्रान्याश्चान्या ओषधयो व्यतिषक्ताः

१ दक्षिणेत्यथ Be Ben (sec. m) On this passage cp. Pañc br. XVI 1. 12.

२ After •मध्य• G ins (on the margin), •र्धाचेत्य, thus also the Vivarana.

३ See Ṛgveda X 47. 6

४ •मुपहितम• Be G (sec. m), the Vir.; •नूपहितम• the other MSS.—•विस्रग्दार्येनि• G and one copy of the Vir.; •विस्रग्दार्यनि• Ben and another copy of the Vir.; •विरंदार्यनि• U, these MSS. point to a reading •अविस्र(स)ग्दारि; •विस्रग्दीर्यमनि• D, •वि(पि)स्रग्-दीर्य(र्ष)मस्य° Ben C H D; these MSS point to a reading •अवि-स्रग्दार्यम्. Both readings occur equally in Baudh. pitṛmedha I. 4-7. 14 (cp. Hir. pi. sū. I. 1 : 33. 3). Gārgya Gopālayajvan comments· अविस्रग्दारि यत्र विविधं दारणं प्रदरादिकं विदारणं न विद्य तदविस्रग्दार्यम्।—बहुलौषधि G U D C, the Vir; •षधी Be •षधिकं Ben •षधीकं H

स्युः प्रागुदक्प्रवणं यथा चालाखसारिणीरापः स्युर्नातिप्रवणं
यस्मादन्यत्पुरस्तात्समन्तिकं देवयजनं न विन्देयुस्तदेतां प्राची-
नवꣳशाꣳ शालां मापयन्ति । कृत्तिकाः खल्विमाः प्राचीं
दिशं न परिजहति[१] । तासाꣳ संदर्शनेन मापयेदित्येतदेकꣳ ।
श्रोणासंदर्शनेन मापयेदित्येतदेकं । चित्रास्वात्योरन्तरेणेत्येत-
56. 11. दपरं । दिक्स्तीकाशा भवतीति[२] । द्वाभिरेवैषा[३] दिक्स्ती-
काशा भवत्यथाप्युदाहरन्ति[४] वꣳशानामेवातीकाशान्कुर्या-
दिति । द्वौ स्तोमौ प्रातःसवनं वहत इति[५] । त्रिवृत्पञ्चदशौ
प्रातःसवनं वहतः । पञ्चदशसप्तदशौ माध्यन्दिनꣳ सवनꣳ ।
सप्तदशैकविꣳशौ तृतीयसवनमेष एव सꣳस्थतुष्टोमो भवति ।
चत्वारो हि स्तोमा भवन्त्येष एव सन्द्वादशस्तोमो[६] भवति ।
.88 17 द्वादश हि[७] स्तोत्राणि भवन्ति । यथो एतदौपमन्यवस्य कल्पं
वेद्यन्ते पुरस्ताद्वैनत्त्रैविध्यगतेषु देवयजनमध्यवस्येद्विज्ञायते
मा वा इयꣳ सत्यैव वेदिरिति । ॥ ५ ॥ तृतीयः ॥
159 9 अथेममाग्नावैष्णवमेके प्रागग्नीषोमीयात्प्रवृत्त उपरिष्टादा[८] ।

---

१ MSS., exc. H. ०जहंति (०जाहनंति Be)

२ भवंतीति MSS., but दिक्स्तीकाशा is adj., sc. शाला ।

३ °वैषां MSS.

४ Thus (भवति) U only, भवंत्य० H, भवंतीत्य० all the other MSS.

५ See TS. VII. 1. 1. 1.

६ Thus C and the Viv., all the other MSS. unanimously ०स्तोमौ ।

७ Om. G U D C.

८ Thus Be G U D Ben (sec. m.); उपरिष्टादायं H Ben (pr. m.) and the Viv. one copy another, sec. m., originally reading उपरिष्टादयं : the Viv. explains यथा स्यात् ।

न उ खलु दीक्षणीयायै बर्हिर्यजुषा कुर्यादिति व्युपनिधाय[1]
I. 159. 10 संभारान्प्राक् पाणिसंमर्शनात्स्यजमानं व्रतमुपनयति न पत्नीं
संनह्यतीत्यध्वरदीक्षायै व्रतं प्रणुदते । सर्वैवैषा व्रतोपायनीया
I. 159. 11 भवतीष्टिरप्यस्तु पत्नीसंनहनं । न यजमानभागं करोति न
ब्रह्मभागमित्याशीःसंयोजनावेवैतावुक्तौ[2] भवतः । किमुपक्रम-
माणो यज्ञमाशिषं वदेदित्यथापि सुभिक्षो व्रतोपायनीयस्य
भवतीति । कस्मै[3] किं सुभिक्षायावद्यद्यजमानभागस्य खलु-
क्षादनाद्ब्रह्मभाग उत्सीदति । संयुक्तौ ह्येतौ यजमानभागब्रह्म-
I. 159 12. भागाविति । न बर्हिषदं पुरोडाशं करोति नान्वाहार्यं याच-
तीति । दक्षिणोक्तावेवैतावुक्तौ[4] भवतो । ऽन्या उ खल्विह
ib. दक्षिणाः प्रतिख्याता भवन्ति । न फलीकरणहोमेन चरति
न समिष्टयजुर्जुहोतीत्यन्तपरिक्रमिणावेवैतावुक्तौ[5] भवतः ।
I. 159 13. किमुपक्रममाणो यज्ञमन्तं परिणयेदिति । न पूर्णपात्रे यज-
मानं वाचयति न विष्णुक्रमान्क्रमत इत्यवस्थोक्तः खलु पूर्ण-

---

१ Thus Be G (sec. m) and the Viv a. h. l and as cited elsewhere; the prep. वि om. D U Ben H C

२ Thus Be U (sec. m) G (only •वैवै•), एव H U (pr. m), •संयोजनाव••• D, •संयोजनायैवैतावु• Ben and a citation by Sāyana; •संयोजनावैमातावु• C.

३ The Viv. seems to read तस्मै ।

४ Thus Be G U (sec m.) Ben (sec. m) and the Viv.; दक्षिणो-कार्यावेवैतावु• Ben and U (pr. m), दक्षिणैकार्यो एवैतावु• D, दक्षिणैकार्यो एवैतावु° C, मध्यमयोक्ताद्दक्षिणैकार्यावेवैतावु° H.

५ °क्रमणावे° D C, °क्रामिणावे° Be.

पाचो भवत्यन्यः खल्विहावभृथः प्रतिख्यातो भवत्यन्तपरि-
क्रमिणो विष्णुक्रमाः । किमुपक्रममाणो यज्ञमन्तं परिणये-
दिति । ॥ ६ ॥

59. 18. द्वादश वात्सबन्धान्युदयच्छन्निति[१] । कतमानि खल्वि-
मानि वात्सबन्धानि भवन्तीत्येता एव स्रुवाहुतीरन्यत्र स्वाहा-
60. 10 कारादित्यथाप्युदाहरन्ति समानसंख्यानो ऽग्निर्क्षचि[२] तिस्रो
देवतास्तानि द्वादशाथेदं कृष्णाजिनं नौरुक्[३] भवत्याच्य जान्वे-
163 5 तत्पार्श्वत एवाभिमर्पद्दक्षिणं प्रति रभ्यं यथा नावं । नक्तं चेद-
सेध्य पश्चेदाहवनीयमेवैतेन यजुषोपतिष्ठेताथेमानि द्वैधाणि
व्रतानि सायमुपक्रमाणि प्रातरपवर्गाण्यथौपसदानि प्रातरुप-
164 2 क्रमाणि सायमपवर्गाण्यथेदं[४] द्वैच[४] व्रतं परिश्रित्यैव व्रतयेदा-
हवनीय एवैतत्पुराग्निहोत्रं हूयते स मानुध्यास्यतीति[५] ।
॥ ७ ॥ चतुर्थः ॥

---

१ See TS. VI 1. 2 5

२ ग्निश्चचि G (sec m.), मित्वचि Be, ग्नीनिति U (sec m ), ग्निनिति C, ग्निरिमि *the other* MSS.

३ See TS I 2 2. e (last pāda)

४ Thus Ben (pr. m ) G (sec. m.), °धैतद्वैत्तं °धैतंद्वैच' H C U D G (pr. m.) Ben (sec. m ).

५ Thus H, समनुध्यास्यतीति Be Ben, स मानुध्यासीदिति C U D G (pr. m ), समनुध्यस्यासीदिति G (pr. m ). *The Vivaraṇī seems to have* read as C, etc.: स याहवनीयोऽनुध्यासीत् यान्नीयमन्यत्र जुह्वमानं द्रक्ष्येति, but we expect a future: 'if the Āhavanīya sees that I offer somewhere else, it will... .'

I. 167. 3. अथायं प्रायणीयस्तस्य कः कर्मण उपक्रमो भवतीति ।
बर्हिर्यजुषा कुर्याद्यदि पुरस्ताद्यजुष्कृतꣳ स्यात्पाणी संमृशीत ।
परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेद्ब्रह्माणं दक्षिणत
उपवेश्याथैवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं
निदध्यात्स्फ्योपरि पात्रीं । पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति
कर्मान्तस्तायत आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वाहवनीये
स्रुवाहुतिꣳ हुत्वोपनिष्क्रम्य संप्रैषमुक्ताभिप्रपद्य तिरः पवित्रमप
आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेदथाज्यं निर्वपे-
दथाज्यमधिश्रयेदुभय पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्ब-
यजुर्हरेत्सिद्धमत ऊर्ध्वꣳ । शंय्वन्तः[1] प्रायणीयः संतिष्ठते ।
को नु खल्वस्य कर्मणोऽवशेषो भवतीत्या स्रुचां विमोकात्
चरुधविषामाप्यनिनयनं विद्यत इति[2] । स्थालीभिरेव चरू
I. 169. 20 निर्वपेदिति नु[3] बौधायनस्य कल्पः । किंदेवत्या उ खलु
पदाहुतिर्भवतीत्याग्नेयीत्येके । वैष्णवीत्येके । प्राजापत्येत्येके ।
I. 172. 19 वाग्देवत्येत्येव[4] ब्रूयात्कृष्णायोर्णास्तुकया सोमविक्रयिणमन्तरेण
I. 172. 15 भ्रूमके[5] विध्यति । राजानं प्रत्यपोर्णुते यजमानः ॥ ८ ॥

---

१ शंयुवंतः G D C U (pr. m), शंयवत Be.

२ Effaced in G.

३ Om Be H

४ Thus H, °देवत्येव the other MSS.

५ Thus G U (sec. m.) and the Vir (both copies); भ्रमके Be, भ्रूमध्ये Ben H Ke², भ्रुवोर्मध्ये C D; cp. Baudh. grhs. I 1: कृष्णे-नाञ्जनेन भ्रूमके दर्भेण संमार्ष्टि ।

वयः सुपर्णा उपसेदुरिन्द्रमित्येतयाथ यदि न सोमविक्रयी
स्यादपरेण यूपावटकालं पलाशशाखां निहत्य समुपनह्य राजानं
पलाशशाखायाꣳ समासज्योपासीताथ यदि कश्चित्सवसंयुक्तं
व्याहरेत्क्षिप्रमिति वा त्वरध्वमिति वा कुरुतेति वा[1] तद्राजा-
73. 19 नमाददीत न संवादा आवर्तेरन्स सोमविक्रयी स्यादथेयं
74. 14 प्रथमा सुब्रह्मण्योंकारान्तैवैषोक्ता भवत्यथायमातिथ्यस्तस्य कः
कर्मण उपक्रमो भवतीति बर्हिर्यजुषा कुर्याद्यदि पुरस्ता-
दयजुष्कृतꣳ स्यात्पाणी संमृशीत परिस्तृणीयात्पात्राणि
निर्णिज्य सꣳसादयेद्ब्राह्मणं दक्षिणत उपवेश्य दक्षिणमनड्वाहं
विमुच्यान्वेवोत्तरत उदपात्रं निधाय जघनेन गार्हपत्यꣳ स्फ्यं
निदध्यात्स्फ्योपरि पात्री पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति
कर्मान्तस्तायत आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वोत्तरमन-
ड्वाहं विमुच्य राजानं प्रपादयेत्सिद्धमत आग्निष्टोमिकं[2] कर्म
75. 19. जानीयादा संप्रैषात्कृष्णाजिनावधवनेनैवातिथ्यं[3] प्रतिपद्यते
सिद्धमत ऊर्ध्वम् ॥ ८ ॥ पञ्चमः ॥

स दर्भपुञ्जीलमुद्गृह्येति कतरत्तु खल्विदं दर्भपुञ्जीलं
भवतीति यदेवैतद्धोतारयोर्निदधातीति सप्त गिरीन्निा-
न्वेति कतमे नु खल्विमे गिरयो भवन्तीति प्रयाजानू-

---

१ वैति or वोति MSS. exc H; om C.

२ °ष्टोमिकं G U¦D C.

३ °धवने° G and the Vir.; °यवने° Be, °धयतिने° Ben, °धूनने°
D U C.—°तिथ्यं G, °तिथ्य Be, °तिथ्यस्य the other MSS

याजा[1] एवैता उक्ता भवन्तीति दीक्षणीयायाः प्रायणीयाया आतिथ्याया अग्नीषोमीयस्येत्येवाप्युदाहरन्ति[2] दीक्षणीया प्रायणीयातिथ्योपसदो ऽग्नीषोमीयः सप्तम इति ॥ यज्ञो देवेभ्यो निलायतेति । कतमो नु खल्वयं यज्ञो भवतीति । य एवैष दृष्टान्त आतिथ्यः संतिष्ठते ॥ तं देवा हस्तान्सꣳरभ्यैच्छन्निति । यदेवैतत्तानूनप्त्रꣳ समवमृशन्तीति[3] ॥ तमिन्द्र उपर्युपर्यत्यक्रामदिति । यदेवैतदुपसद्भिश्चरन्तीति ॥ तमेभ्यो यज्ञ एव यज्ञमाहरदिति । कतमो[4] नु खल्वयं यज्ञो यज्ञमाहरदिति[4] । दीक्षणीया प्रायणीयातिथ्यैष एव यज्ञो यज्ञमाहरदिति[5] ॥ वराहो ऽयं वाममोष इति । सप्तमक्तां वर्षिष्ठं । तद्यजमानं वामं वसु मुष्णातीति ॥ के नु खल्वातिथ्यस्यानूयाजा[2] भवन्तीत्युपसद इत्येव ब्रूयात्किंदेवत्या उ खलूपसदो भवन्ती-
I 178. 19. त्याग्नेय्य इत्येव ब्रूयात्कथमु खलूपसदामुपक्रमो भवतीति । बर्हिर्यजुषा कुर्याद्यदि पुरस्तादयजुष्कृतꣳ स्यात्प्राणी संमृशीत । परिस्तृणीयात्पात्राणि निर्णिज्य सꣳसादयेन्मदन्तीः सꣳस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यहस्तः प्राङेत्य स्तम्बयजुर्हरेत्त्रिरुद्धूमत ऊर्ध्वं । यथा प्रकृत्यासेवं प्रथ-

---

१ ॰नुयाजा MSS

२ ॰षोमीयस्य चेत्यथा G U (sec. m.)

३ सम् found in Be G U D C only

४ From कतमो unto ॰माहरदिति missing in G H, इति missing in Ben C Bo D U

५ इति missing in G U C

मायामुपमर्दि स्रुचः सादयेदभ्यूढा द्वितीयस्यामभ्यूढतरास्तृतीयस्याम्[1] संत्वरमाणा दर्वोपमर्द्भिः प्रचरेयुर्नाक्तमाद्रियेरन्संमयाङ्गुलिः[2] स्रुवमादायाग्निवोपमर्दं जुहुयादिति ॥ १० ॥ षष्ठः ॥

क उ खल्वग्नीषोमीयस्य बर्हिर्यजुषा कुर्यादित्युद्दास्य
38.13 प्रवर्ग्यं प्रागाहवनीयस्य प्रणयनात्सवनीयेभ्यश्च वत्सानुपाकुर्या-
द्विच्छिन्न आहवनीये गार्हपत्ये पदततीयमुपवपेदेवमुपय-
33.14. मनीष्वथैयमौदुम्बरी[3] स्रुणा यजमानेन संमिता कार्या
भवत्यथायं यूपो यजमानस्यारत्निभिर्विमितो भवति
यथोपर[4] इत्येके ऽन्तो हैवैतानि[5] कुर्याद्यूपावटं तु[6] परि-
34.11 लिख्य पाणी संस्पृशीत परिस्तृणीयात्पात्राणि निर्णिज्य
सङ्मादयेत्प्रोक्षणीः सङ्स्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्या-
धिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि ता उत्तरवेदिङ्
हरन्ति प्रोक्षणीश्चाथ प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौरोडा-

---

१ ॰दतराम्॰ H Ben U Be, ॰दतरांश्च॰ G, ॰दतराश्च॰ D C

२ Thus G D Ben CU (pr. m.), ॰मयांगुलि Be, ॰मयंगुलीभिः U (sec. m.). H defective. The Viv परिमृद्धीतमूलं प्रस्तरमादाय ।

३ Between उपवपेदेवम् and उपयमनीषु H Ben ins. इध्मम्, not G U Be D C

४ Conjectural reading ; यथोपर इत्येके G C Be U. यथोपरेत्येके Ben, यमोपर इत्येके H, यथोमपर इत्येके D, सोपर इ॰ the Viv.

५ हैवैमानि all the MSS , with त॰ the Viv. (one copy) = यज्ञमात्राणि ।

६ om. H

शिकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाप्येनाद्रवेत्पत्न्या[1] तदवेक्षितमुपयच्छीत[2] तेजो ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनडूलोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः। प्रसिद्धमाहवनीयसकाशे

I. 97. 11. पृषदाज्यवन्त्याज्यानि गृहीतेति विद्धमत ऊर्ध्वं। यथो एतच्छालीकेः कल्पं वेदयन्ते पत्नीशाल एवाग्नीषोमस्याज्यानि गृहीयात्तानि खरे सादयेदिति। समन्वानीय वाननन्वानीय[3] वा पुराणगार्हपत्यं पाणौ संगृह्णीत। परिस्तृणीयात्पात्राणि निर्णिज्य संसादयेत्प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुवः संमार्ष्टि। ता अत्रैव सह संसादयन्ति प्रोक्षणीश्च। न[4] प्रतिप्रस्थाता पत्नीमभिसंनह्यत्यौरोडाग्निकेन[5]। नैनां[5] गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाप्येनाद्रवेत्पत्न्या तदवेक्षितमुपयच्छीत तेजो ऽसीत्यथैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनद्गार्हपत्ये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनडूलोत्तरेण प्रोक्षणीः

---

१ ॰नोद्रवे॰ instead of ॰नाद्रवे॰ G here and infra l. 14. Is उद्रवेत् the better reading?

२ Thus here and l. 14 G Be D C Ben U (sec. m.), ॰यच्छेत H U (pr. m.)

३ Only given by G U (sec. m.)

४ Thus G U D Be, C H Ben om.

५ Thus Be C only, the other MSS. om. न reading ॰दाग्निकेनैनां।

मादयित्वावेचेतोत्पुतुयादाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धं गार्हपत्यसकाशे पृषदाज्यवन्त्याज्यानि गृहीत्वा ॥ ११ ॥

194. 17. परिक्रम्यैव उत्पदाय ब्रह्मणे राजानमुत्प्रयच्छेत्संप्रच्छन्नेषु सुवाङ्गतौ[१] जुहुयात्संप्रच्छन्नाश्चैव गच्छेयुराहवनीयाद्राजा दक्षिणार्धः स्यादथाग्निरथ ग्रावोवायव्यान्युत्तरार्धान्याज्यान्यपि वाग्निर्दक्षिणार्धः स्यादथ राजाथ ग्रावोवायव्यान्युत्तरार्धान्येवाज्यानि । पूर्वया द्वारोपनिष्क्रम्योत्तरेण सदः परीत्याग्नीध्रागारे ऽग्निं निधायाभिक्रम्य प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्णियं प्रतिपद्यते[२] । ऽन्वञ्च आज्यैराहवनीये कृत्वेध्मं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तादाश्ववालं प्रस्तरं गृहीत्वा पञ्चविधं बर्हिं स्तीर्त्वा प्रस्तरपाणिः प्राङभिसृप्य काष्मर्यमयान्परिधीन्परिधायोर्ध्वे समिधावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिं स्तृणीयाद्बर्हिषि विधृती । विधृत्योराश्ववालं प्रस्तरं । प्रस्तरे जुहूं । बर्हिषीतरा । एता असदन्निति समभिमृश्याप उपस्पृश्य ब्रह्मणो राजानमादाय पूर्वया द्वारा हविर्धानं

---

१ सुवाङ्गतौ॰ MSS, but cp the Viv. सं सोम कृपाय इति (TS. I. 3. 4 *a* and *b*).

२ प्रतिपद्यते Be G U D C, प्रतिपद्यते Ben, ॰थप्रतिपद्यते H

प्रपाद्येदात्मानमभिपरिहरमाण[1] इव । निहुमत ऊर्ध्वम् ।
॥ १२ ॥ सप्तमः ॥

क उ खलु श्रिम्यन्दिधाबर्हिरपवर्गं गच्छतीत्यग्नीषोमीय
इत्येव ब्रूयात्क उ खल्वग्नीषोमीयः सुत्यमहरनुप्रसेतीति ।
प्रवर्ग्यक्रियामित्येव[2] ब्रूयात्क उ खलु प्रवर्ग्यः सुत्यमहरनुप्रसे-
तीति । प्रवर्ग्यक्रियामित्येव[2] ब्रूयात्का उ खलु देवता
सुब्रह्मण्या प्रथमाह्वयत इति । वागेव वाचमाह्वयतीति । क
I. 197 2. उ खलु पितापुत्रीया[3] सुब्रह्मण्या प्रथमाह्वयत इत्यग्नीषोमी-
यस्य हुतायां वपायां परिहृतासु वसतीवरीषु द्वितीया ।
प्रातरनुवाके तृतीया । दक्षिणानामु ह काल एक आह्वयन्ती-
I. 197. 8. त्यथ यो वीडितः कुम्भ्यं याचतीति दृढ इत्येवेदमुक्तं
I. 198. 17. भवति । पयस्य मक्तूंस्य कुरुतेति श्रपणार्थ एवैते उक्ते
I. 199 1 भवतश्चतस्रो रशनाश्चतस्रो वपाश्रपणीर्दंयमिध्माबर्हिरिति
प्रवनीयस्य चानूबन्ध्यस्य चैतानि भवन्ति । कास्तस्र स्थाली-
र्वायव्याः सोमग्रहणीरित्यादित्यस्थाल्युक्थ्यस्थाल्याग्रयणस्थाली
ध्रुवस्थालीत्यथेमानि द्वादशोर्ध्वपात्राणि भवन्ति दधिग्रहपात्र-
मपांशुवन्तर्यामयोर्द्विदेवत्यानां शुक्रामन्थिनोर्ऋतुपात्रे आदि-

---

१ Thus Ben C Be G D U (sec. m), •त्मानमपरिह• H, •त्मानमभि-परिह• U (pr. m.)

२ Thus Ben C G (sec. m) U (pr. m.), •क्रियायामित्येव H Be U (sec m)

३ •पुत्रिया G U

त्यस्याख्या औपशयं पात्रमुक्थ्यस्याख्या औपशयं पात्रमथैष एकादश चमसा भवन्ति यजमानस्य ब्रह्मणो होतुरुद्गातुर्मैत्रावरुणस्य ब्राह्मणाच्छंसिनोऽच्छावाकस्य सदस्यस्याग्नीधः पोतुर्नेष्टुरिति । तेषां त्वष्टूणि सद्रूपाणि कारयेन्नैयग्रोधानां । विज्ञायत उत्तरस्यां[1] ततो[1] यदस्यरुकैसमसैर्भक्षयन्ति न्यग्रोधचमसैरित्यैतस्मान्नैयग्रोधा एव भवन्ति । रश्मिश्च[2] स[2] इत्यदाभ्य एवैष उक्तो भवत्यधिपतिश्च स इति प्राजापत्य एष दधिग्रहो भवति । सारस्वतश्च मे पौष्णश्च[3] स[3] इति[3] वसतीवरीरित्येक आहुरंश इत्येक आहू राजसूयिक एष महाग्रहो भवति । पोषणाद्[4] ह[4] पौष्णो भवति ग्रहणाद्[5] सारस्वत इति । ॥ १३ ॥ अष्टमः ॥

200, 5
98 16
अथेदं महारात्रिकं कर्म । तस्य कः कर्मण उपक्रमो भवतीति । हस्तपादाप्रक्षाल्यान्तरेण चात्वालोत्करौ देवयजनमभि प्रपद्यन्ते । तेषां यथासंप्रैषं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेद्वैष्णव्या हविर्धानमित्यथो-परमत्यथैष आग्नीध्रः पूर्वः पत्नीशालं द्रुत्वाग्नीनुपसमाधाय

---

१ The first citation from the *uttarātatih* seems XVIII 21
300 13, the second I have not been able to point out

२ °चमस H; Ben om. स ।

३ Thus G D U C, पोष्णश्च स H, पोष्णश्चेति Ben, पौष्ण इति Be.

४ Thus G U; पौषणाद्ध ह H D C, पोषणादृहि Ben Be

५ Thus emended, ग्रहणात्तु G U Ben Be, ग्रहणाद्ध C ग्रहणात्तु D, ग्रहणात H.

संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । ऽपरः[1] प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्ष्येदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता उत्तरवेदिꣳ हरन्ति प्रोक्षणीर्धायाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति । संसृष्टानि द्विधा पात्राण्यभिमृश्यन्त[2] इति । वायव्यया वायव्यान्यैन्द्र्या[3] सदो । ऽथैष उन्नेता ग्रावोवायव्यꣳ संप्रवाह्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र दध्याबर्हिरुपसादयत्यथ प्रतिप्रस्थाता पत्नीमभिसंनह्येत्यौरोडाग्निकेनाथैनां गार्हपत्यमीक्षयेदथैनामाज्यमवेक्षयित्वाज्येनाद्रवेत्युक्त्वा[4] तदेवेक्षितमुपयच्छीत[5] तेजो ऽसीत्यथैनच्छ्रुवलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाहवनीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनद्धुलोत्तरेण प्रोक्षणीः सादयित्वावेक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः प्रसिद्धमाहव-

---

१ ऽपरः U (pr. m.), परः D C, स्वपरः Ben (pr. m.), स्वपरः the other MSS. H. wholly corrupt.

२ Uncertain reading •सृश्यन्त Ben. •सृश्यन्त G (sec. m.), °स्वर्शत G (pr. m.), •सृश्यात Bo C U, •सृमात D, •सृश्यंत D. The Vir. (one copy) •सृश्य changed into •स्पृश्य, and thus also the other copy.

३ •यैन्द्रिया G C.

४ •मोद्दवे• again G.

५ •यच्छीत G (sec. m.), U (pr. m.) D C Ben, •यच्छेत G (pr. m.) Bo H U (sec. m.)

नीयमकाले पृषदाज्यवन्त्याज्यानि गृह्णीते । भिद्गमत ऊर्ध्वम् ।

॥ १४ ॥

98. 17 अथ शालीकैरेवमेवैषां यथासंप्रैषं विहितानि कर्माणि भवन्त्यथाध्वर्युराग्नेय्यर्चाग्नीध्रमभिमृशेदैष्ण्यथा हविर्धानमित्यथोपरमत्यथैव आग्नीध्रः पूर्वः पत्नीशालं हुत्वाग्निमुपसमाधाय संपरिस्तीर्य पात्राणि निर्णिज्य सꣳसाद्याज्यं विलाप्योपास्ते । ऽपरः प्रतिप्रस्थाता प्रोक्षणीः सꣳस्कृत्य पात्राणि प्रोक्ष्याज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्रुचः संमार्ष्टि । ता आग्नीध्रꣳ हरन्ति प्रोक्षणीश्चाथाध्वर्युराग्नेय्यर्चा स्रुचो ऽभिमृशति संमृष्टानि द्विधा पात्राण्यभिमृशन्त्यन्त[1] इति । वायव्यया वायव्यानैन्द्र्या[2] सदो । ऽथैव उन्नेता ग्रावाणो वायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधाय दक्षिणस्य हविर्धानस्य पुरोऽक्षꣳ सꣳसादयत्युपकल्पयते प्रतिप्रस्थाता पृषदाज्याय दध्याग्नीध्र दध्यावर्हिरुपसादयति । न प्रतिप्रस्थाता पत्नीमभिसंमृज्योत्पौरोडाशिकेन[3] । नैनां[3] गार्हपत्यमीक्षयेदवेक्षाज्यमवेक्षयित्वाक्षेनाद्रवेत्पत्न्या[4] तदवेक्षितमुपयच्छीत[5] तेजो ऽसीत्य

—

१ •स्त्यन्त Be G, स्त्यन्त U C, •स्त्यन्त D, H and Ben abbreviate this passage

२ •न्यैन्द्र्या G U C, •न्यैन्द्रीया Be

३ Thus G (pr. m.) D Be C Ben; •केनैनां G (sec. m.) H; •केमाधिमां U (sec m.)

४ •मोद्रवे• again G.

५ •यच्छीत all (H abbreviates)

थैनच्छकलेनोपयत्य हरेत्तेजो ऽनु प्रेहीत्यथैनदाग्नीध्रीये ऽधिश्रयेदग्निस्ते तेजो मा विनैदित्यथैनदूल्मोत्तरेण प्रोक्षणीः सादयित्वाविक्षेतोत्पुनुयादाज्यवतीभ्यां प्रोक्षणीः। प्रसिद्धमाग्नी-ध्रीयमकाग्ने पृषदाज्यवन्त्याज्यानि गृहीत्वा परिकर्मिभ्य उपादाय प्रोक्षणीहस्त उत्तरेणाग्नीध्रीयं धिष्ण्यं प्रतिपद्यते। ऽन्वस्य आज्यैरेधेभ्यं प्रोक्ष्य वेदिं प्रोक्ष्य बर्हिः प्रोक्ष्य बर्हिरासन्नं प्रोक्ष्योपनिनीय पुरस्तात्प्रस्तरं गृहीत्वैकविधं[१] बर्हिः स्तीर्त्वा[१] प्रस्तरपाणिः प्राङभिसृप्यौदुम्बरान्परिधीन्परिधायोर्ध्वं समि-धावभ्याधाय बर्हिर्मुष्टिं विधृती प्रस्तरमित्येतत्समादाय प्रदक्षिणमावृत्य पूर्वया द्वारा हविर्धानं प्रपद्योत्तरार्धे खरस्य बर्हिर्मुष्टिं स्तृणीयाद्बर्हिषि विधृती। विधृत्योः प्रस्तरं। प्रस्तरे जुहूं। बर्हिषीतरा। एता असदन्निति समभिमृश्य योगेन युनक्ति। सिद्धमत ऊर्ध्वम्। ॥ १५ ॥ नवमः ॥

किमग्निहोत्री दीक्षितः किमौपसदः किमसुत इति। विज्ञायते व्रतमेव दीक्षितस्याग्निहोत्रं। घर्मोच्छिष्टमौपसदस्यौ-पांश्वन्तर्यामौ[२] प्रसुतस्य। यो ह्यनुदिते स सायमग्निहोत्र-भक्षिर्य उदिते स प्रातरग्निहोत्रभक्षिः। किंदर्शपूर्णमास[३]

१ The three words एक ०बं० स्त र्त्वा effaced in G

२ Thus G U D C Be, ०पसदसुपांश्व० H, ०पसदस्यपांश्व० Ben, the Vivarana also has औपसदस्य।

३ Thus Be G U (sec. m ), the Viv , ०दर्शपूर्णमासस्य H दार्शं (or दर्शं) पौर्णमास्य (or स्य) H D C Ben (pr m.), all without इति ; ०मास इति Ben (sec m ). ०दर्शपौर्णमास इति U (pr. m )

इति विज्ञायते पौर्णमासं यज्ञमग्नीषोमीयं पशुमकुर्वत
99. 11 दार्शं यज्ञमाग्नेयं पशुमकुर्वतेति । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते प्रातःसवन एव सर्वेभ्यः सवनेभ्यः सवनीयान्निर्वपेत्सकृदुपहितान्येव कपालानि स्युः समभिवासनात्सकृत्स्विष्टं कर्म तायते[1] । तेषामेकैकमुद्वासयेदनुसवनं येनयेन प्रचरिष्यन्स्यादपि वा व्यभिमृष्टानां पिण्डानां परिशाययीतेतरयोः[2] सवनयोर्यथैककपालस्याचिकीर्षितः[3] स्यात्प्रातःसवनिकैरेव[4] वर्तयेत्कृतान्कात्पौरोडाशिकं कर्म सत्वाददीतेतरयोः[5] सवनयोरनुसवनमङ्गाराध्यूहनेनैव कपालेषु प्रतिपद्येत । सिद्धमत ऊर्ध्वम् ।
॥ १६ ॥ दशमः ॥

16. 6 यथो एतद्बौधायनस्य कल्पं वेदयन्त उभयतःशुक्रा आदित्यवतीर्वसतीवरीर्गृह्णीयात्ताः शुक्रास्ताभिराप्याययेत्ताभिरभिषुणुयादित्युपर्यर्धेऽ होतृचमसं हलेत्येतेनैवापि हतीयेन वर्तयेच्चयोरपः पूर्वया द्वारा हविर्धानं प्रपादयेद्धोतृचमसीया वसतीवरीया मैत्रावरुणचमसीया इति दक्षिणेन होतार परिगृह्यापरया[6] द्वारैकधनानीतमिश्र्य काले सर्वत्र एव मैत्रा-

१ Thus Ben, म्रायते C D, तायत H (reading स्याम् instead of तेषाम्), वर्तयेत् G Be U (see m.) and the Vir.

२ इतरयोः Be'G (pr. m.), उभयोः Ben C U D G (see m.)

३ यद्येक॰ H and the Vir., यदेक॰ G U Ben Be, C defective.

४ ॰सवनिकै॰ G U D, Vir., ॰सवनीकै॰ the other MSS.

५ ॰तरयोः MSS.

६ परिगृह्य॰ Be U.

वरुणचमसौयाः पर्यस्येत्तृतीयं वसतीवरीणामवनयेत्तृतीयमेक-
I. 190, 12. धनानामेवमस्य प्राक्केवलः शुक्रो भवति । सोमग्रहं गृह्णीयाद्ब्र-
ह्मवर्चसकामस्येत्यनिरुक्तस्यैवैष राज्ञो ग्रहीतव्यो भवति । का
उ खलु देवताः प्रथमꣳ सोमं भक्षयन्तीत्यपि इत्येव ब्रूया-
दिज्ञायत उपहूताः सोमस्य पिबतोपहूतो युष्माकꣳ सोमः
पिबत्विति । क उ खलु सोमस्य सोमपीथो भवतीति ।
विज्ञायते यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम
सोमाय स्वाहेत्येष एवापि सोमस्य सोमपीथस्तेषाꣳ संनिपति-
तानामानुपूर्व्येति[१] । निग्राभ्यास्तु वाचयित्वादाभ्येन चरेदथो-
पाꣳशुसवनमाददीताथ राजानं निर्वपेत्सिद्धमत आग्निष्टोमिकं
कर्म जानीयादा फलकयोरभिमर्शनात्फलके अभिमृश्य
पृश्निभिश्चरेदथ प्राणग्रहैश्चरेदथाꣳशुमुपसंगृह्णीयादथाꣳशुना
चरेदथोपाꣳशुना । काले ऽन्तर्यामेण । सिद्धमत ऊर्ध्वम् ।
॥ १७ ॥ एकादशः ॥

III. 101, 7. यथो एतद्बौधायनस्य कल्पं वेदयन्त आग्रयणस्य ग्रहणे
द्वयोर्धारयोः प्रातःसवने गृह्णीयात्तिसृणां माध्यंदिने सवने
चतसृणां तृतीयसवन इत्युपाꣳश्वन्तर्यामयोस्तु सꣳस्रावः संततश्च
शुक्र एते द्वे प्रातःसवने । संततश्चैव शुक्र आग्रयणस्योदचनेन

१ Thus G U D, °पातिमाना° H Ben, °पतिनाम° C, °पोभानां Be — °मानुपूर्व्येति G U (see m.), °मानुपूर्व्ये H, मानुपूर्व्येति Be, °मानुपूर्व्येति Ben U (pr. m.), °मनुपूर्व्येति C D.

च[1] तृतीया माध्यंदिने सवन । आदित्यस्थाल्यामतिग्राह्यो[2]
राजादित्यग्रहस्य च संस्राव आग्रयणस्यैवोदचनेन[3] च चतुर्थी
तृतीयसवने । संपूतꣳ राजानं चर्येण श्रीणीयात्पयसा सक्तु-
भिर्हिरण्येनेति । स यं कं च ग्रहं गृह्णात्युभयत[4] उदवृधꣳ
हिरण्यश्रयणमेवैनं करोति । तिष्ठता ग्रहा होतव्या अन्यत्र
101, 9 प्राजापत्याच्च मन्थिसꣳस्रावाच्चेति । यथो एतच्छालीकिः कल्प
वेदयन्ते द्रप्सानुमन्त्रणीयास्विति सुवाक्ततीरेवैता जुहुयात्क-
स्मिन्नु खल्वेनाः काले जुहुयादिति । संततीर्ह्वेवैनमेनाः[5]
212 6 काले जुहुयादित्यथोत्तरित्याह प्राञ्चꣳ राजानं पूतभृतमभि
संप्रवयताद्दशाभिराधवनीयं मृद्वा न्युब्जतादित्युक्तसंप्रैष[6] एष
एते[7] अवकाशेभ्यो ऽवकाशैरुपस्थाय दशाभिरेवैनं[8] मृद्वा
न्युब्जति । ॥ १८ ॥

समानं कर्माश्विनाद्ग्रहादित्यो[9] धिष्णियव्याघारणसंपा-

---

१ Given by G U D only
२ °स्थाल्या ग्रति° Ben H
३ एव om. Be G U D
४ गृह्णीयादिति instead of गृह्णाति Be G (sec. m ).
५ संतती° Be, एततीर्ह्वे° H
६ Thus Ben H, °त्युक्तः सं° the other MSS.
७ एते G U D C, यते Be, दाते Ben, H. corrupt.
८ Thus G (sec. m ) U D, दशभिरेनं C, दशाभिरेवैनां the other MSS
९ Viz.: समानं कर्माश्विनाद्ग्रहादिति यदोच्यते (e g. XI 3 67, 17) तत्रा-
यमेव विधिः ।

I. 213. 20 नादित्येव समुद्देशो[1] भवति । कथमु खलु धिष्ण्यानां
यथान्युप्तं व्याघारणं भवतीति । विभुवे प्रवाहणाय स्वाहेति
व्याघार्य रौद्रेणानीकेन पाहि माग्ने पिपृहि मा मा मा
I. 214. 8. हिंसीरिति । सप्त वृणीत इति । होतैवैषां सप्तमो भवत्य-
हर्गण उत्तरेष्वहःसु प्रातःसवनिकं प्रसर्पणं कथं स्यादित्या-
हवनीयोपस्थानप्रभृतीत्येव ब्रूयात्सकृत् स्फ्यविघनानामुपस्थानं ।
I. 217. 6. कथमु खल्वेषां विसंस्थितसंचरः स्यादित्यन्तरेण होतुश्च
धिष्ण्यं ब्राह्मणाच्छंसिनश्च ये ऽधिष्ण्या । अथ धिष्ण्य-
वन्तः स्वंस्वमेव धिष्ण्यमुत्तरेण परिक्रामेयुरथेमावध्वर्यू
अचमसौ[2] भवतः । क उ खल्वेतयोर्भक्षो भवतीति । होतृच-
मस इत्येव ब्रूयात्क उ खल्वतिजासेकाहे सोमं न भक्षयन्ती-
त्युन्नेता यावस्तुत्सुब्रह्मण्य इत्येव ब्रूयात्क उ खलु सत्रे
दीक्षिता भक्षयेयुरिति । नेष्टुश्चमस उन्नेता भक्षयेदच्छावाक-
चमसे ग्रावस्तुदुद्गातृचमसे[3] सुब्रह्मण्यो । ऽपि वा सर्व एवाग्नी-
ध्रचमसे भक्षयेयुर्विज्ञायत उत्तरस्यां ततौ[4] तेषां य एवाग्नीध्रः
स यावस्तुत्स सुब्रह्मण्यः स उन्नेतेति । ॥ १९ ॥ द्वादशः ॥
I. 217. 11. III. 104. 7. यथो एतद्बौधायनस्य कल्पं वेदयन्ते समानपात्र्यामेव

---

१ °देश्या G (sec. m.)

२ Thus H Ben (pr. m.) C D U (pr. m.). °चमिनौ Ben (sec. m.) Be G U (sec. m.)

३ °द्गातृचमसे H only.

४ See XVII 21 : 301. 2

मवनीयानुद्वासयेत्पुरोडाशस्यैवैषो ऽलङ्कारो दृष्टो भवति[१]।
मध्यतः पुरोडाशमुपस्तीर्णाभिघारितमुद्वासयेत्पुरस्ताद्धाना
दक्षिणतः करम्भं पश्चात्परिवापमामिक्षामुत्तरत:। कथमु
217. 13 खल्वेषाᳪं संचरो[२] स्यादिति। प्रज्ञातो हविष्पथो। ऽथापरं।
पूर्वया द्वारोपनिर्हृत्यापरया द्वारा सदः प्रपाद्याग्रेण कर्तृन्
जघनेन धिष्णियानुत्तरेणाच्छावाकस्य धिष्णियं पर्याहृत्या-
न्यस्मै प्रदायैतेनैव यथेतमेत्योत्तरेण सदः परीत्य पूर्वया
द्वारोपनिर्हृत्योत्तरेणाग्नीध्रीयं पर्याहृत्यान्तर्वेद्यासादयेदध्वर्यु-
श्चेद्धविर्धानं[३] प्रपन्नः स्यदुपनिष्क्राम मा त्वाभिपरिह्वारिष-
218. 12 मित्येव ब्रूयाद्यथो एतद्बौधायनस्य कल्पं वेदयन्ते द्विदेवत्ये-
षूत्तरतस्तिष्ठते प्रतिप्रस्थात्रे प्रतिनिर्ग्राह्य[४] प्रयच्छतीति यदा-
ध्वर्युः पुरोडाशान्प्रत्यङ् हरेत्तद्धविर्धानं प्रपद्यमानं प्रतिप्रस्था-
तारं परिगृह्णीयाद्ग्रहावादायोपनिष्क्रामत्युपनिष्क्रान्तस्यैवाध्व-
र्युर्ग्रहावादत्ते। ऽपरेण परिक्रान्तायोत्तरतस्तिष्ठते प्रतिप्रस्थात्रे

---

१ °तीति Ben.

२ Thus Ben C U and G (pr. m.) the Viv (one copy), संचरि D H the Viv. (another copy), संचारौ Be G (sec. m.), संचरः U (sec m.). The Viv.. सचरणं संचरो गमनं तस्याश्च संचरो (°रि) मार्गः cp. XXVI. 24

३ Thus H G (pr. m.) Kes'., the other MSS. ins. यथ before अध्वर्यु°

४ प्रतिनिग्रा° Ben Be and one copy of the Viv

प्रतिनिर्ग्राह्यं[1] प्रयच्छतीति । कृत्वा यवनीयं[2] प्रदक्षिणमावृत्य प्रतिप्रस्थाताध्वर्युं परिगृह्णीयादध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्नाचेल । मिद्धमत ऊर्ध्वमंशैने द्विदेवत्या अननुवषट्कारा भवन्ति । क्व[3] उ खल्वेषामनुवषट्कारो भवतीति । विज्ञायते द्विदेवत्यानृतुयाजान्यश्च पात्नीवतो ग्रहः । आदित्यग्रह-
III 106.2 माविन्नौ[4] तान्स्म[5] मानुवषट्कृथा[5] इति । यथो एतदौपमन्यवस्य कल्पं वेदयन्ते द्विदेवत्येषु दीर्घभक्षेणैवैनाम्भक्षयेद्धृदे हि[6] माविशेति प्रतिपद्य कृत्वे दक्षाय रायस्पोषाय सुवीरताया इत्यातः । प्रत्यभिमृशते मा मा राजन्विबीभिषो मा मे हार्दि त्विषा वधीः । वृषणे शुष्मायायुषे वर्चस इत्यथानुसवनभक्षेणैव[7] सवनमुखीयान्भक्षयेदिति । ॥ २० ॥ त्रयोदशः ॥

क्व उ खलु वसतीवरस्य स्तोत्रभक्तिर्भवति शस्त्रभक्तिश्चेति । विश्वरूपासु हास्य स्तोत्रभक्तिर्भवति प्रातरनुवाके[8] ह शस्त्रभक्तिः । क्व उ खलूपांश्वन्तर्यामयोर्द्विदेवत्यानाꣳ स्तोत्रशस्त्र-

---

१ प्रतिनिग्रा॰ Ben Be and one copy of the Viv.

२ °नीयाप्रदक्षिण° G U D C

३ क्व उ U Be Ben C, Viv, क्व G H.

४ •माविन्न Be Ben (sec. m.), •माविन्नान् Ben (pr. m.)

५ Thus G (pr. m.) U D C and cp. Āśv. śs. v. 5 21 (Vait. sū. 20 4); मास्मतानुवष॰ Ben (pr. m.), मास्मतामनुवष॰ G (sec. m.), तास्मानानुवष॰ H, स्मास्मतानुवष॰ Be

६ •भक्षणेनैवै॰ Be G.

७ •भक्षणेनैव Be G U (sec. m.)

८ •वाको Be G C U (sec. m.).

द्विनाराशꣳसं प्रातःसवनं च माध्यंदिनसवनं चैकनाराशꣳसं तृतीयसवनं । चत्वार्युन्नीयमानसूक्तानि[1] भवन्तीति[2] । सवनमुखेषु[3] चाच्छावाकचमसे[3] च[3] । त्रयो दीर्घभक्षाः । क उ खलु प्रवर्ग्यः सुत्यमहरनुसमेतीति । दधिघर्म इत्येव ब्रूया-
I. 234. 1. त्किमुपसदाꣳ । सौम्यस्य परीज्येति । तिरश्चर्मफलके ग्राव्णो दादयतीति । शुष्काभिषव इत्येतदाचक्षते । कथमु खलु रथंतरपृष्ठे माहेन्द्रं ग्रहं गृह्णीयान्वाꣳ इन्द्रो य ओजसेत्येतया गायत्र्या माहेन्द्रं गृह्णीयादथ बृहत्पृष्ठे महाꣳ इन्द्रो नृवदा चर्षणिप्रा इत्येतया त्रिष्टुभा माहेन्द्रमथोभयपृष्ठे[4] यथा पृष्ठं तथा गृह्णीयात्पुरोरुचमितरां कुर्यादिति । ॥ २२ ॥ चतुर्दशः ॥

कथमु खलु सवनीयस्य पश्वोश्चर्याया उपक्रमो भवतीतीडसूनꣳ संस्तीर्य पृषदाज्यं विहृत्य[5] जुह्वाꣳ समानीयान्तरेण चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदासादयेत्पशुं पश्चहोता चतसृपूपस्तृणीते । मनोताप्रभृतिनेडान्तेन चरेत्सिद्धमत ऊर्ध्वमथोक्थ्यविग्रहेषु य एव प्रातःसवनिको[6]

---

१ °युन्नीयमानानिसू° Ben H, °युन्नीयमानिसू° Be, °युन्नीयसू° C.

२ इति om. G.

३ Thus, hesitatingly, emended. सवनमुखेष्वाच्छावाकच (°कस°) मसेष सवनेच C U D; सवनमुखेष्वच्छावाकचमसे च सवनमुखेषु G (sec. m.); सवनमुखेषाच्छावाकचमसे च सवने च Be Ben; सवनमुखेच्छावाकचमसेवसवने च H

४ After माहेन्द्रम् G U D ins. ग्रहम् ।

५ Thus H, विसृत्य the other MSS. (G is indistinct).

६ °सावनीको or °सवनीको some of the MSS.

भक्तिर्भवतीति । यदुपांशु शंसति तदुपांश्वन्तर्यामयोः ।
26, 1. प्रउग उक्थे[1] द्विदेवत्यानामयाथं प्रतिप्रस्थातर्तुग्रहेभ्यध्वर्योरुत्त-
रतःसेवी भवतीत्यामुतस्य यन्तं प्रतिप्रस्थाताध्वर्युं परिगृह्णी-
याद्याध्वर्युः प्रतिप्रस्थातारं प्रत्यङ् द्रवन्पात्रेण । सिद्धमत
ऊर्ध्वं । किंदेवत्या उ खल्वृतुयाजा भवन्तीत्यृतुदेवता
इत्येतदेकमयापरमिन्द्रꣳ होता यजति । मरुतः पोता यजति ।
ग्रावो नेष्टा यजत्यग्निमाग्नीध्रो यजतीन्द्रं ब्राह्मणाच्छꣳसी
यजति । मित्रावरुणौ मैत्रावरुणो । देवं द्रविणोदां चत्वारो ।
ऽश्विनाध्वर्यू अध्वर्यू[2] । अग्निं[2] गृहपतिं गृहपतिः । क्व नु
खल्वैन्द्राग्नस्य स्तोत्रभक्तिर्भवतीति । बहिष्पवमान इत्येव ब्रूयाद्
के चन ग्रहा अस्तोत्राः पवमान एव[3] तेषाꣳ[4] स्तोत्रं
भवन्ति[5] । क्व उ खलु माध्यंदिनीयाः सवनीया निह्नवन्त इति ।
क्षुल्लकवैश्वदेवस्य स्तोत्र इत्येव ब्रूयात्क[6] वतीन्द्र[illegible]दा ।
माहेन्द्रस्य स्तोत्र इत्येव ब्रूयात् । ॥ २१ ॥
नाराशꣳसमुपदस्तꣳ ऋतादेवेनꣳ[6] होतरन्त[illegible]या-

---

१ Thus U (sec. m.), Viv.; उक्थो G U (pr. m.) [illegible] Ben H C. *Acc. to the Viv it is synonymous to* यज्ञे।

२ Thus G U D C, अध्वर्यवोऽग्निं Ben H Be.

३ Thus G Be, एवैतेषां Ben D H U C

४ भवंतीति Ben H.

५ उ खलु ins. G U D C

६ Thus G U (sec. m.), ऋतादेवं H [illegible] (pr. m.) Ben (sec. m.) Be, ऋतादिमे Ben (pr. m.)

चिच्छिदुः सोम राजन्नित्यवभृथयजूंषि जुहोतीति[1] कत-
मानि खल्विमान्यवभृथयजूंषि भवन्तीति यदेवैनदाहव-
नीये शाकलैश्चरन्ति देवकृतस्यैनसो ऽवयजनमसि मनुष्यकृत-
स्यैनसो ऽवयजनमसि पितृकृतस्यैनसो ऽवयजनमसीत्यवभृथा-
261. 5. हुताविति कतमा उ खल्वियमवभृथाहुतिर्भवतीत्यप उद्धृत्य[2]
जुहोति यज्ञस्य त्वा यज्ञपते हविर्भिः । सूक्तवाके नमो-
वाके विधेम स्वाहेति तिष्ठन्त एवावभृथेन प्रचरेयुः
61. 17. पराङावृत्तः प्रपदेनोदक्रान्तं प्रत्यस्येत्सिद्धमत ऊर्ध्वम्

॥ २४ ॥ पञ्चदशः ॥

262. 6. अथायमुदयनीयस्तस्य कः कर्मण उपक्रमो भवतीति
बर्हिर्यजुषा कुर्यात्पाणी संमृशीत परिस्तृणीयात्पात्राणि
निर्णिज्य संसादयेद्ब्रह्माणं दक्षिणत उपवेश्याग्नेवोत्तरत उद-
पात्रं निधाय जघनेन गार्हपत्यं स्फ्यं निदध्यात्स्फ्योपरि
पात्र्यौ पात्र्यां व्रीहीनावपेच्छूर्पादानप्रभृति[3] कर्मान्तस्तायत
आ प्रस्कन्दनात्प्रस्कन्दनान्तं कर्म कृत्वा तिरः पवित्रमप
आनीयाधिश्रित्य तिरः पवित्रं तण्डुलानावपेद्यथाज्यं[3] निर्व-
पेद्यथान्यमधिश्रयेदुभयं पर्यग्नि कृत्वा जघनेन गार्हपत्यमौप-
सदायां वेद्यां स्तम्बयजुर्हरेत्सिद्धमत ऊर्ध्वं तस्य प्रतस्था-
सादनं दक्षिणं परिधिसन्धिमपरं विमुच्य दक्षिणं वा परि-

---

1 See TS. VI 6. 3. 1

2 Thus G U M D C, उद्धत्य Ben हृत्य H

3 From चावपेच्छूर्पा॰ unto तडुलान् om G Be and Ben (sec. m.).

धिमथेण प्राञ्चं प्रायणीयमासादयेत्प्रत्यञ्चमुदयनीयमग्निमुखा
अत्र देवता इज्यन्ते । संस्थन्त[1] उदयनीयः संतिष्ठते । ॥ २५ ॥
I. 263. 2 अथ यदि पशुरुपक्रान्तः स्यात्पाणी संमृजीत । परि-
मृणीयात्पात्राणि निर्णिज्य संसादयेत्प्रोक्षणीः संस्कृत्य
पात्राणि प्रोक्षेदाज्यं निरुप्याधिश्रित्य पर्यग्नि कृत्वा स्फ्यमाद-
दीत । संप्रैषप्रभृति पाशुबन्धिकं कर्म तायते । सिद्धमत ऊर्ध्वं ।
III. 114. 17. यथो एतच्छालीकिः कथं वेदयन्ते मैत्रावरुण्यामिक्षया यजेतेति
तस्यै सह सवनीयैर्वत्सापाकरणं[2] सह सायंदोहमुदयनीयेन
चरित्वा पाणी संमृजीत । परिमृणीयात्पात्राणि निर्णिज्य
संसादयेत्प्रोक्षणीः संस्कृत्य पात्राणि प्रोक्षेदथ प्रातर्दोहं
धेनूर्दोहयेदथैनां[3] गार्हपत्ये श्रपयित्वानभिघारितामुद्वासयेद-
थाज्यं[4] निर्वपेदथाज्यमधिश्रयेदुभयं पर्यग्नि कृत्वाहवनीये
वैदलकान्परिधीन्परिधायाथैनां[5] पुनरधिश्रित्याभिघारिता-
मुद्वास्यान्तर्वेद्यासादयेदथाग्नये सोमायेत्याज्यभागाभ्यां चरेदाज्य-
भागान्तं कर्म कृत्वा दक्षिणे वेद्यन्ते केशश्मश्रु वपते नखानि

---

१ Thus write G M U (sec. m.), सयुक्तः Be U (pr. m.) C, संस्थन्त H, संयुन्त D.

२ Thus M Be Ben, वत्सानामपाक॰ G U D C, वत्सापाक॰ H.

३ ॰नै Ben (pr. m.) Be.

४ Thus H U D C G (pr. m.) Ben (pr. m.); ॰त्वानभिघारितमु॰ M, ॰त्वाभिघारितमु॰ G (sec. m.) Be Ben (sec. m.).

५ वैदल॰ M only.

निक्रान्ते[1] ऽध्याभागप्रतिपत्केडान्ता[1] संतिष्ठते । ऽथेयमुदव-
263.9. सानीयोपांशु भवति पुनराधेयधर्मे[2] वि[3] । सहस्रत्रावेदी
स्तम्बयजुषो हरणमसंनद्धा पत्नी यज्ञपुच्छमन्वास्ते । ॥ २६ ॥
षोडशः ॥

अथेममग्निचयं त्र्युपसत्कꣳ षडुपसत्कं द्वादशोपसत्कमिति[2] चिन्वते । स यदि साहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताक्रतौ[4] जुहोति । द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताक्रतौ जुहोति । श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताक्रतौ जुहोत्यौपवसथिकैव तृतीयाथ यदि साहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताक्रतौ जुहोति । श्वो[5] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताक्रतौ जुहोति[5] । स एवमेव पञ्चाहमौपवसथिकैव षष्ठ्यथ यदि साहस्रं द्वादशोपसत्कं चेष्यमाणो भवति यथासूत्रं[6] तथाथ

---

१ ०न स्वाध्य० Ben H.

२ Thus G Ben C D, ०धर्म्यापि U, ०धर्म्ये वि M, ०धर्मेश्चिप H, ०धंम्यामाप Be.

३ ०र्कं वेति Ben H.

४ Here and infra some of the MSS. read ०क्रतौर्जुहो० ।

५ The passage from श्वो unto जुहोति om. M Be, in G it is effaced.

६ यथासूत्रमथ H G (sec. m).

यदि द्विषाहस्रं[1] त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति[2] द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति। श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिꣳ षष्ठीं चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ[3] सपुरीषामुपदधात्यौपवसथिकेन तृतीयाथ यदि द्विषाहस्रꣳ षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति। श्वो[4] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिꣳ सपुरीषामुपधाय संचिताहुती हुत्वाहार्याꣳ सपुरीषामुपदधाति[4]। स एवमेव पञ्चाहमौपवसथिकेन षष्ठ्यथ यदि द्विषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष[5] एताꣳ रात्रिं वसति। श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताहुती हुत्वाहार्याꣳ[6] सपुरीषामुपदधाति[6]।

---

१ द्विषा° and द्विसा° the MSS. promiscue; thus also त्रिषा°, त्रिसा°।

२ Thus Be G M, -मुपधाय the other MSS.

३ °चार्यꣳ M here and infra each time.

४ From श्वो unto °दधाति effaced in G.

५ Most of the MSS. ins सपुरीषाम् after चितिम्, but cp. the following chapter.

६ हुत्वा हेह चार्यं सपुरीषे उप° M.

स एवमेव यथास्तृतं तथा वर्तमानः पुरीषंपुरीषमुपधाय संचिताकृती कृत्वाहार्याः सपुरीषामुपदधात्यौपवसथिकैव' द्वादशी' ॥ २७ ॥

अथ यदि त्रिषाहस्रं त्र्युपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिं सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति' द्वितीयां चितिं सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति' श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य तृतीयां चितिं चतुर्थीं चितिं पञ्चमीं चितिं षष्ठीं चितिं सपुरीषामुपधाय संचिताकृती कृत्वा द्वेद्वे आहार्ये सपुरीषे उपदधात्यौपवसथिकैव तृतीयाथ यदि त्रिषाहस्रं षडुपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिं सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति' श्वो[२] भूते प्रवर्ग्योपसद्भ्यां प्रचर्य द्वितीयां चितिं सपुरीषामुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति[२]' स एवमेव पञ्चाह'मौपवसथिकैव षष्ठ्य'थ यदि त्रिषाहस्रं द्वादशोपसत्कं चेष्यमाणो भवति पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचर्य प्रथमां चितिमुपधायाध्यस्तपुरीष एतां रात्रिं वसति' श्वो भूते प्रवर्ग्योपसद्भ्यां प्रचर्य पुरीषमुपधाय संचिताकृती कृत्वा द्वे आहार्ये सपुरीषे उपदधाति' स एवमेव यथास्तृतं तथा

---

१ कृत्वा द्वेद्वे आहार्ये सपुरीषे उप॰ M

२...२ Effaced in G.

वर्तमानः पुरीषंपुरीषमुपधाय संचिताकृती कृत्वा द्वे आहार्ये
मपुरीषे उपदधात्यौपवसथिकेव द्वादशी । कथमु[२] खल्वन्त-
रुपसत्कं बहिरुपसत्कमन्तर्बहिरुपसत्कमिति विजानीयाद्दे । वस्य
संवत्सरस्य द्वादशावभिष्य राजानं क्रीणीयात्सो ऽन्तरुपसत्कः ।
संवत्सरे पर्यवेते राजानं क्रीणीयात्स बहिरुपसत्को । द्वैचस्य
संवत्सरस्य षडवभिष्य राजानं क्रीणीयात्तावोपसदः स्युत्तरस्य
षड्रात्रः सो ऽन्तर्बहिरुपसत्कः । ॥ २८ ॥ सप्तदशः ॥
II. 1. 8 स्वदसेनाग्ं समां विलेन करोतीति[१] । समां[२] भूम्यां
II. 1. 16. निदधातीत्येवेदमुक्तं भवत्यथैनावश्वगर्दभावुत्तरत उपस्थापयति[३]
पुरस्ताद्वा प्रत्यञ्चौ । स यदि पुरस्तात्प्रत्यञ्चौ दक्षिणो ऽश्व
उत्तरो गर्दभो । ऽथ यद्युत्तरतः पूर्वो ऽश्वो[४] ऽपरो[५] गर्दभो ।
ऽग्निभ्यः पशूनालभत इति । पञ्चानां पशूनां ब्राह्मणं भवति ।
स यद्यु[६] हैतान्पशूनुपाकरोत्या बर्हिष उपासनात्पाशुबन्धिकं
कर्म वर्तयित्वा शिरांसि प्रच्छिद्यापो देहानभ्यवहरेयुरपो

---

१ Thus U G (pr. m) C Ben (pr. m.) H M D, कृत्व G (sec. m.) Ben (sec m.)

२ इति given by G U and a citation in the Mahāgnisarvasva.

३ समा D H U (pr. m.) C, समं M U (sec m.) Ben (sec. m.) Be.

४ Thus (singul.) U (sec. m.) the Viv and the Mahāgni-plural the other MSS.

५ Thus (ऽपरो) M D C U (pr. m.) the Viv. and Ms, ऽउत्तर Be Ben G U (sec m.); H corrupt.

६ यद्य M (i e. *yady aha*).

देशानभ्यवहरन्तीति विज्ञायते । मासमेतं[1] ब्रह्मचर्यं चरति ।
यो ऽधःसंवेश्यमाऽस्माय्यम्युपायो भवति पूर्वदीचेत्येतामाषचते[2] ।
4. 7. चयोदशमेवैतं मासमभि दीचमाणो मन्यते । ऽच कृष्णाजिने
यजमानं वाचयति मुष्टी चैव न करोति वाचं च न यच्छ-
तीति । कृष्णाजिनप्रभृति कर्मान्त एष भवत्यावेदनात्संयमाया-
सुपषदि वेदिं विमिमीते[3] स्तम्बयजुर्हरतीति । कर्मवश-
. 16. कारितमेवैतद्भवत्यथ[4] संभारेयूपान्निवपन्यदद्श्चन्द्रमसि कृष्णं
तन्मनसा ध्यायेत्तदपीहेति । ॥ २८ ॥
4. 1. उत्तरमुत्तरं प्रति बलीवर्दमुत्तरामुत्तरां सीतां कृषन्म-
3. 9. वेधं वपन्स्वयमातृणावकाशं नावकामेदित्यथ[5] हैके[6] पुरुषे
7. 8 च स्वयमातृणायां च साम गायन्ति । किमु खलु स्वयमातृ-
णान्निकोतं भवतीति । हिरण्येष्टका मण्डलेष्टका रेतःसिगित्येव
ब्रूयाद्यमिष्टकागणमुपदध्यात्तं न व्यवेयाद्दचिणेन दचिण-
मुत्तरेणोत्तरं । स यदि दचिणतः पुरस्तादेष्टका उपदध्या-
दपसलैरावर्ततीय यद्युत्तरतः पश्चाद्वा प्रदचिणमावृत्य
. 15. स्वयमातृणामेवाभिमुख इष्टका उपदध्यात्कृत्तिका उपदधा-

---

1 Thus D C M (sec. m.) Ben Ms; मासमेकं Bo H G U M (pr. m.).

2 पूर्वा दी॰ Ben H.

3 मिमीते Ben H.

4 एव om. M G D C; तद् instead of एतद् Ben (sec. m.) Bo.

5 नावका॰ M D C H U (pr. m.) Ms, नातिक्रा॰ G U (sec. m.) Bo Ben.

6 All the MSS. ins. ब्रुवते, only Ms. om.

तीति । कतमा उ खल्विमाः कृत्तिका भवन्तीति । विद्युत
इत्येव ब्रूयादसवर्णार्थे[1] बौधायनस्याग्नावग्नौ पुनश्चितिः । सह
सा न पुरीषचितिः पञ्च्या चित्या वृद्धिर्जेति । वृद्धिर्जैवेति
. 45. 17. प्राचीकिः । यदं प्रश्चादमाहरमाणः कस्मिन्नु खल्वेतत्काल
आहरेदिति । नचेष्टका उपधायेत्येव ब्रूयात्त्रिभिः कर्म-
भिरभिप्रैति पुरीषस्योपधानेन साहस्रवता प्रोक्षणेन धेनुकरणे-
नेति । यो ऽष्टाभिः कर्मभिरभिप्रैत्युत्तमे संचिताञ्जलौ शत-
रुद्रीयं नमस्काराः परिषेचनं विकर्षणञ्च सर्पाञ्जलीः साममिरु-
पस्थानमनुशंसनमिति । ॥ ३० ॥ अष्टादशः ॥

II 133 1. अथ किं[2] नानाबीजानां निर्वपणे तन्त्रमिति[2] स्रुगादानं
तन्त्रञ्च शूर्पादानं तन्त्रं [3]धूःप्रभृतयः शकटमन्त्राः सर्वे तन्त्रं
भवन्त्या[4] सावित्राद्वीजंबीजमभ्यावर्तते सावित्रं । तन्त्रं
दग्धहोताभिप्रव्रजनं परिदानमिति तन्त्रं भवति । तन्त्रं
कृष्णाजिनावधवनं तन्त्रमुलूखलाध्यूहनं तन्त्रं पुरोडाशीयाना-
मावपनं तन्त्रं मुसलस्यावधानं तन्त्रञ्च शूर्पस्योपोहनं तन्त्रञ्च

---

१ ॰दासवचा॰ some of the MSS. and the citation in Viv.; but cp. the vivarana itself: ब्रुवति वै स तांञ् खवन्तीमिति (TS. v. 4. 10. 3) दोषनिरस्यर्थो पुनश्चितिरिति ।

२ किं and इति only given by U (sec. m.) G (sec m.), Ms., the other MSS. om. those words.

३ Before धूः॰ M Bo Ben D C G (pr. m.) ins. प्रत्योषयं प्रत्यौषयं or प्रत्योषधयं (i.e. प्रत्योषधं ?).

४ Thus H Bo G D C Ms; भवन्त्या Ben U M.

हविष्कृदावपनप्रभृतिमन्त्रो बीजंबीजमभ्यावर्तते प्रस्कन्दनान्तो ।
33.13. यथो एतच्छालीकेः कल्पं वेदयन्ते सह स्विष्टकृतान्याकामे-
134.1. दित्येकादशप्रयाज एवैतदुपपद्यते न पञ्चप्रयाजे । यथो एतदौ-
पमन्यवस्य कल्पं वेदयन्ते पुरस्तात्स्विष्टकृतो यावदाम्नातेना-
भिषिञ्चेन्नात्र कृष्णाजिनं न रुक्मौ न पार्थानि भवन्ति
कुम्भानेव सꣳस्तीर्य तेष्वेनमभिषिञ्चेदिति[1] । कथमु खलु
मन्त्रिणामभिषेक आवर्तत इत्यभिषेक आवेदनं प्रथमे ऽन्नाभि-
षेकः प्रथमे ऽन्नस्यावघ्रापणमादितश्चान्ततश्च बहिष्पवमान-
मास्तावे सुवीरम्नहरद्यंशायज्ञियस्य[2] स्तोत्रे द्वाभ्यामभिमृशे-
दिति । ॥ ३१ ॥

कथमु खल्वेकादशिनानां[3] पशूनां पर्याया उपक्रमो भवती-
तीडसूनꣳ सꣳस्तीर्य पृषदाज्यं विहृत्य जुह्वाꣳ समानीयान्तरेण
चात्वालोत्करावुदङ्ङुपनिष्क्रम्य संवदेताभिघारयेदासादयेत्पशु[4]
पशुहोता चतसृषूपस्तृणीते । मुख्यस्य पशोर्दैवतमवदाय[5]

---

१ Corrected acc. to the Dvaidha, तेष्वेनम॰ MSS (तेषुवेन॰ M, तैष॰ H)

२ Thus, with the Saṃhitā, G Be Ben. ॰यज्ञाय॰ H U D M C.

३ Thus(॰खल्वेका॰) MSS. (एकादशिनानाम् M.)

४ ॰दासादये॰ not found in Be and effaced in Ben, but cp. XXV.
but —पशुं seems, here and further on, to have been changed
to पशून् in G.

५ ॰दैवतम॰ M U Be, the Vic., ॰दैवतम॰ H G D C Ben.—After
प M. ins. चच ।

वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभिघारयेदथोपभृति स्विष्टकृते[1] सर्वेषां व्यङ्गाणाꣳ सकृत्सकृत्स्विष्टकृते समवदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं प्रोर्णुयाद्यूष्णोपसिच्य[2] नाभिघारयेदथ[2] हृदयं जिह्वां वक्षस्तनिम मतस्ने[3] वनिष्ठुमिति[4] पात्र्याꣳ[4] समवधाय यूष्णोपसिच्य नाभिघारयेदथ कꣳसे वा चमसे वा वसाहोमं गृहीत्वा यूष्णोपसिच्याथाभिघारयेत्तम्प्रोत्पशुं । पार्श्वेन वसाहोमं
I. 123 13 प्रयौयान्मꣳस्नः[5] कुम्भतो । जघनेनोत्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहुयात्परिगिꣳष्याच दिग्भ्यो । ऽथेतरद्वसाहोमहवन्याꣳ समवनयेद्वषट्कृते हविर्जुहोति । सो ऽग्निहैव स्विष्टकृतमुद्द्रुत्याक्रम्य जुह्वां चैव वसाहोमहवन्यां चोपस्तृणीते । द्वितीयस्य पशोर्दैवतमवदाय वृक्यमेदो यूषन्नवधाय तेन जुहूं प्रोर्णुयाद्यूष्णोपसिच्याभिघारयेदथोपभृति[6] स्विष्टकृते सर्वेषां व्यङ्गाणाꣳ सकृत्सकृत्समवदाय वृक्यमेदो यूषन्नवधाय तेनोपभृतं[7] प्रोर्णुयात्समवत्त-

---

१ Not given by G U D M

२ ॰सिच्याभिघा॰ G, ॰सिच्यानाभिघा॰ H.

३ Thus D Ben C U (pr. m.), मतस्नू G M U (sec. m.), मतस्न H.

४ Thus we ought to read also IV. 9. 123. 7.

५ Here and further on the MSS. write मꣳस्नः मस्नः मौस्नः मंस्नः मस्नः।

६ ॰थैतथो॰ M.

७ After ॰भृतं G H M ins. यूष्णोपसिच्य नाभिघारयेत्, U ins. यूष्णोपसिच्य नाभिघारयेदथ हृदयं जिह्वां वक्षस्तनिम मतस्नू वनिष्ठुमिति पात्र्याम्; C is incomplete.

मेतद्यूष्णोपसिच्य[1] नाभिघारयेत्तथैव[2] कꣳसे वा चमसे वा
वसाहोमं गृह्णीयाद्यूष्णोपसिञ्चेदथाभिघारयेत्संस्पृशेत्पशुं ।
पार्श्वेन वसाहोमं प्रयौयान्माꣳस्तः कुम्भतो । जघनेनोत्तरवेदिं
परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसाहोमं जुहु-
यात्परिशिꣳष्याच्च दिग्भ्यो[3] । वषट्कृते हविर्जुहोति । स एव-
मेव सर्वेषां पशूनाꣳ । स यत्र वारुणस्य स्विष्टकृते ऽवद्येत्त-
द्विरभिघारयेत्समवत्तमेवैतद्यूष्णोपसिच्याभिघारयेत्तथैव कꣳसे
वा चमसे वा वसाहोमं गृह्णीयाद्यूष्णोपसिच्याभिघारयेत्संस्पृ-
शेत्पशुं । पार्श्वेन वसाहोमं प्रयौयान्माꣳस्तः कुम्भतो । जघनेनो-
त्तरवेदिं परिक्रम्याश्रावयेद्याज्याया अर्धर्चे प्रतिप्रस्थाता वसा-
होमं जुहुयात्परिशिꣳष्याच्च दिग्भ्यो । ऽथैतद्वसाहोमहवन्याꣳ
समवनयेद्वषट्कृते ऽहविर्जुहोत्यथ पुरस्ताद्वनस्पतेः समान्यो
दिशः प्रतियजेदथ वनस्पतिना चरेदथ स्विष्टकृता । सिद्धमत
35.3 ऊर्ध्वं । यथो एतदौपमन्यवस्य कल्प वेदयन्ते मैत्रावरुण्यामि-
क्षया निरूढया यजेतेति सिद्धमतौपवसथिकं कर्म आनौ-
62.8. याद्यथामावास्यायाꣳ संनयतो ऽन्यत्र पिण्डपितृयज्ञात्संवत्सरं

---

1 समवत्तमेवैत॰ M, समवत्तमेतद् D, Ben om. समव॰ unto ॰घारये॰ (1. 2).

2 एव om. M, probably rightly.

3 Between दिग्भ्यो and वष॰ M H Ben U ins. तथैव कंसे वा चमसे समवनयेद्, in Ben and U these words are effaced; G (partly secunda, partly prima manu) तथैवैतद्वसाहोमहवन्यां समवनयेद् ।

व्यतिषक्तानेवैतेषां पशूनां[1] पञ्च दक्षिणार्धान्पशूनुपक्रम्यैव[2]
स्थापयेयुर्वासत्वं प्रथममत्यानयेयुरथानुपूर्वमितरानन्तरेण चा-
त्वालोत्करावुदङ्ङुपनिष्क्रम्य[3] प्रस्थान्या[4] निघ्नन्युरपि वा मण्डली-
कृतांस्तेषां वपा उत्खिद्याहरेयुर्यथा[5] वपाभिविहारं चात्मानं
I. 296. 3. च न व्यवेयुरथायं पात्नीवतो ऽङ्गुष्ठपर्वमात्रेणोत्तरार्धाद्यूपाद्गवी-
यान्स्यादपि वा यथाब्राह्मणमवाङ्नाभिमचषालमनवस्तीर्णं-
. 297. 15. मथेदꣳ[6] सर्पाणामयनꣳ स्तोमतो विकृतं भवत्यथेदं विश्व-
. 298. 11. सृजामयनं कथमिदानीन्तनेषु स्यादिति। शतं दीक्षाः शत-
मुपसदः सहस्रं° प्रसुतः°। ॥ २४ ॥ पञ्चदशः ॥
I. 299. 10. अथेदं कुण्डपायिनामयनमग्निहोत्रपूर्वमेके ब्रुवते सोमपूर्व-
मुपयन्ति[8]। तत्पत्नीसंयाजान्तं वा षट्शूलान्तं वाहः कृत्वा

---

१ Om Ben Be.

२ पशून् ms. all the MSS. exc Ben (cp. XVII. 14 : 295. 10).

३ °क्रम्य G U.

४ Thus Ben only and Ms. (प्रस्थानुक्रमावस्थितान्), and the Vivarana (प्रस्थान्यथा स्थितानि (sic) स्युः); प्रतिप्रथाया U (pr. m.), प्रति-प्रस्थानाया the other MSS.

५ Thus the Ms. (तेषां संज्ञप्तानां वपाः अध्वर्युर्या उत्खिद्य परिक्रम्य आहवनीयं प्रति नयेयुः); उत्खिदेयुर्यथा the MSS.

६ अनवस्थितम् instead of अनवस्तीर्णम् G (sec. m.).

७ These words are missing in G Be U H; प्रसुतः M, प्रसूतं Ben.

८ Uncertain reading; °मुपयंति G (sec. m.) Ben; °मुपसं U L, °मुभयं M, °मुपैवयं Be; the Viv.: स एव चारम्भणीयमहः।

समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[1] कृत्वा ग्रावोपायव्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्याहृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाहुतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधोऽभ्याधायैषावर्हिः संनह्याविशिष्य पयाꣳस्युपवसन्त्यथ श्वो भूत आमावास्येन हविषा यजते । तत्र न स्तम्बयजुर्हरति । त एवमेवाहरहर्वसतीवरीः परिहरमाणा अष्टाविꣳशतिमहान्यामावास्येन[2] हविषा यजन्ते । नाग्निहोत्राणि जुह्वति न पौर्णमासीं यजन्ते । स यत्र तृतीयसवने धिष्ण्यान्विहरति तदजस्रं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये करम्भपात्राण्यभिपर्यग्नि कृत्वा तैर्मार्जालीये प्रचरति । गार्हपत्य एव पिण्डपितृयज्ञꣳ श्रपयित्वा तेन मार्जालीय एव प्रचरति । प्रतिपूरुषमुवेवैषां[3] प्रवराꣳस्प्रवृणीत । एकैकस्यैवैषां त्रयस्त्रयः पिण्डाः स्युः पञ्चदश[4] । महापितृयज्ञे स्तीर्णं[5] बर्हिर्भवति न वेदिमालिखति[6] न स्तम्बयजुर्हरति नाज्यानि गृह्णीते । स यत्र

---

१ Emended (cp. XXVI. 18, 19); ॰वरीभिः परिगृह्या॰ U H, वरीरभिपरिग्रह्या॰ M G Ben, ॰वरीभिपरिगृह्या॰ Be.

२ Emended; ॰विꣳशतिरहा॰ MSS.

३ Thus M G U H and the Viv.; ॰पुरुष॰ Ben Be.—॰मुवेवैषां my conjecture (उवेव = उ एव), ॰मुवैवैषां MSS. exc. G (॰मुवेवैषां)।

४ पंचदशा M Ben Be.

५ स्तोर्णं M Be H.

६ After लिखति Ben ins. न खनति ।

तृतीयसवने धिष्णियान्विहरति तदन्तं मार्जालीयं करोति । समासन्नेषु हविःषु गार्हपत्ये महापितृयज्ञहवींष्यपि श्रपयित्वा तैर्मार्जालीये प्रचरेदाहवनीये मारुत्या प्रचरेदन्तमेवावभृथः[1] परीयाद्वितीया[2] वेदिर्भवति प्रक्रमाणां तु तृतीयं नवमस्तु[3] भूमेर्भागो भवतीति ॥ २५ ॥ षोडशः ॥

I. 302, 12. अथ पञ्चहविषमिष्टिमिद्धान्वहं पुनरावृत्तमेकैकेन हविषा
यजेतैकं चेद्वे वा हविषी पर्यवेते स्यातामथ संवत्सरः समा-
प्येत कथं तत्र कुर्यादिति । प्रतिकृष्येतस्य पक्षस्य पञ्चहविष-
I. 302, 16. मिष्टिं निर्वपेदथ संवत्सरतमेऽह्नि पञ्चहविः स्यादिति । प्रथमे
द्वादशाहेऽग्निं चिन्वीतेति । प्रथमे द्वादशाहेऽग्निं चिन्वान-
श्चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमयाष्टाहोनꣳ संव-
त्सरमुत्तमयाथेतरांश्चतुरहोनांश्चतुरहोनानेकैकया[4] चतुर-
श्चतुरो[5] मासानत्याददीत । चतुरहं प्रथमयोपसदा गच्छे-
च्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर एव
मासानेकैकयोपसदा गच्छेदित्युत्तमे[6] द्वादशाहेऽग्निं चिन्वी-
तेत्युत्तमे द्वादशाहेऽग्निं चिन्वानोऽष्टाहोनꣳ संवत्सरं प्रथम-

---

१ Thus M (sec m.) G, °रेदंतमथावभृथा Be; °रेदंतमेथावभृथः U H, °रेदंत एवावभृथ Ben; cp. the Vivarana: अवभृथोऽन्ते भवेत् ।

२ Thus (परीयात्) M Ben; प्रतीयात् the other MSS.

३ नवमंच Ben.

४ Instead of इतरान् (thus Ben M the Viv.) इतान् H Be G U.

५ Thus G U M H Be; चतुरश्चतुरश्चोमान् Ben.

६ इति om. G.

योपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयाथेतरांश्चतुरहोनानेकैकया[१] चतुरश्चतुरहोनान्मासान्प्रत्याददीत[२] ' चतुरहं प्रथमयोपसदा गच्छेच्चतुरहं मध्यमया चतुरहमुत्तमयापि वा चतुरश्चतुर[३] एव मासानेकैकयोपसदा गच्छेदिति ' ॥ २६ ॥

393. 6. अथ लोकंपृणा इष्टका उपदधन्मासमेतीति ' लोकंपृणा इष्टका उपदधन्मासं गत्वा त्रिंशत्तमस्यामहः[४] सर्वं प्रच्छादं प्रच्छादयेदपि वा त्रिंशतो ऽवकाशं कृत्वा लोकंपृणा इष्टका उपदधन्मासमेतीति ' कथमेतं मासं गच्छेदितीष्टिः प्रथमाथ पूर्वाह्णिके प्रवर्ग्योपसदावथेष्टका[५] अथापराह्णिके[५] प्रवर्ग्योपसदौ मासि वसोर्धारेति ' मासं पुरीषेण यन्तीति ' कथमेतं मासं गच्छेदितीष्टिः प्रथमाथ[६] पूर्वाह्णिके प्रवर्ग्योपसदावथ पुरीषमथापराह्णिके प्रवर्ग्योपसदौ ' चतुरो मास उपसद्भिरे-

---

१ Instead of इतरान् some of the MSS. again इमान्;—चतुरहोनान् twice (as above) H, and one of my copies of the Vivaraṇa.

२ ? Thus (and is so to be read also supra, 308. 12 ?) M U G, चतुरश्चतुरोमासान्प्र° K, चतुरश्चतुरहोनान्मासान्प्र° Ben, चतुरश्चतुरोनान्मासान्प्र° Be.

३ Thus Ben H and one copy of the Viv ; चतुर the other MSS.

४ Are these words corrupt ? The Vivaraṇa periphrases: त्रिंशत्तमे ऽह्नि सर्वमुपधेय येनमुपदध्यात् ।

५ Thus according to the Viv. ; °थेष्टकामथाप° G, U Ben ; the other MSS. are incomplete.

६ अथ om. the MSS ; it is given in the Vivaraṇa.

तौति[1] । यदमुत्र[2] मासेन करोति तदिह दशरात्रेण करोति । चतुरो मासः सुनोतीति । कतमे नु खल्विमे मासा भवन्तीति । गवामयनस्य प्रथमोत्तमौ च मासौ यौ चाभितो

II. 306. 1. विषुवतः[3] सह वैषुवतेन । वसतीवरीषु मृत्पिण्डमन्ववधायेति[4] । किमर्थो नु खल्वयं मृत्पिण्डो भवतीति । संतत्यर्थ एष भवतीति । भिन्ने कुम्भे ऽन्यस्मिन्कुम्भ एतं मृत्पिण्डमन्ववधायाप[5] आनयेत्तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[6] कृत्वा ग्रावोपायण्यꣳ संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रे हुत्वा समिद्धारा यन्त्यावृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाहृतायाꣳ सुब्रह्मण्यायाꣳ संवेशनीयाः समिधो ऽभ्याधायैषावद्भिः संतस्थाविरिष्य[7] पयाꣳस्युपवसन्त्यथ श्वो भूते सवनेष्ट्या यजन्ते । तत्र न स्तम्बयजुर्हरति[8] । त एवमेवाहरहर्वसतीवरीः परिहरमाणाः संवत्सरꣳ सवनेष्ट्या यजन्ते । नाग्निहोत्राणि जुह्वति न दर्शपूर्णमासाभ्यां यजन्ते ।

---

१ Thus Ben and the Vir.; उपसद उपसद्भिरेतीति the other MSS.

२ Thus the Vir; यदत्र the MSS

३ वैषुवतो. Ben.

४ Thus Be U G H M, ०पिंडमवधाय Ben.

५ Thus Ben; the other MSS. om. अनु; Be defective.

६ Thus Be G U H; ०वरीरभिपरिगृह्य० M (sec. m.).

७ Thus M G U Be; संतस्थाविरिष्य Ben H.

८ ०हरेति MSS.

ऽथ संवत्सरतम्यां[1] पर्यवेतायां परिश्रुतासु वसतीवरीष्वाहृतायाऽ सुब्रह्मण्यायामहरहः संवेशनीयाः समिधो ऽभ्याधायेषावर्हिः संनह्य पयाऽसि विशिष्योपवसन्त्यथ श्वो भूते[2] ऽभिजितेष्ट्वोत्तिष्ठन्ति[2] । ॥ २७ ॥ सप्तदशः ॥

306. 8. अथ वै भवति छन्दश्चितं चिन्वीत पशुकाम इत्यभ्यादानप्रभृतीन्मन्त्रान्साधयेदा[3] वायव्यात्स्र प्रत्यचं वायव्येन पशुना यजेत प्रत्यचं दीक्षणीयबोखासंभरणप्रभृतीन्मन्त्रान्साधयेदा वात्सप्रविष्णुक्रमेभ्यः । प्रत्यचं वात्सप्रविष्णुक्रमैः क्रमित्वा निगदेदेवेतरान्मन्त्रान्विहरेदग्निऽ[4] । रूपाणि[4] दर्शयेद्वर्चोदिरिणं । तत्र नैर्ऋतान्मन्त्रान्निगदेत्स[5] प्रत्यचं गार्हपत्यमुपतिष्ठेत । प्रत्यचं प्रायणीयया । प्रत्यचमातिथ्यया । कार्ष्णाजिनीप्रभृतीन्मन्त्रान्साधयेदा[6] कर्षणवपनाभ्यां । प्रत्यचं कर्षणवपने । प्रथमां

---

१ Thus emended, •वत्सरतम्यां Be U H, •वत्सरंतम्या G Ben.

२ Thus Ben and G (sec. m.); भूतेभ्योत्तिष्ठंति U, भूतेयोत्तिष्ठंति H Be, भूते इष्ट्वोत्तिष्ठंति M

३ Corrected; इत्यभ्यादान• Ben, इत्यारभ्यादान• the other MSS.; The Vivarana details ऐवस्य नेत्यादिनाभ्यादान• (sic), cp. X. 2: 2. 3.

४ *Doubtful; G (sec m.) reads as given in our text and cp.* the Vivarana विहरेत् चिनुयादग्निम्; विहरेदग्निंतद्रूपाणि Ben, विहरेग्नींद्रूपाणि Be, विहरेदग्नोद्रूपाणि H U, विहरेदग्नोद्रूपाणि M; the comm. on the Sulba cites the passage with अग्निरूपाणि ।

५ Emended; नैर्ऋतीर्मंत्रा• M Be G (sec. m.); नैर्ऋतिमंत्रा Ben U, नैर्ऋतिमत्रा• H.

६ Thus (कार्ष्णाजिनी•) M Be H U (cp. X. 23: 21. 17); •जिनि• G (sec. m.) •जिन• Ben.

तीति[1] । यदमुत्र[2] मासेन करोति तदिह दशरात्रेण करोति । चतुरो मासः सुनोतीति । कतमे नु खल्विमे मासा भवन्तीति । गवामयनस्य प्रथमोत्तमौ च मासौ यौ चाभितो II. 306. 1. विषुवतः[3] सह वैषुवतेन । वसतीवरीषु मृत्पिण्डमन्ववधायेति[4] । किमर्थो नु खल्वयं मृत्पिण्डो भवतीति । संतत्यर्थ एव भवतीति । भिन्ने कुम्भे ऽन्यस्मिन्कुम्भ एतं मृत्पिण्डमन्ववधाय[5] आनयेत्तत्पत्नीसंयाजान्तं वा हृदयशूलान्तं वाहः कृत्वा समुपनह्य राजानं काले वसतीवरीरभिगृह्याहीनसंततिं[6] कृत्वा ग्रावोतायच्यं संप्रक्षाल्य द्रोणकलशे दशापवित्रे समवधायाग्नीध्रं हुत्वा समिद्धारा यन्त्यावृत्य समिध आहवनीय उपसादयन्ति । परिहृतासु वसतीवरीष्वाहूतायां सुब्रह्मण्यायां संवेशनीयाः समिधो ऽभ्याधायेध्माबर्हिः संनह्याविशिष्य[7] पयांस्युपवसन्त्यथ श्वो भूते सवनेष्ट्या यजन्ते । तत्र न स्तम्बयजुर्हरति[8] । त एवमेवाहरहर्वसतीवरीः परिहरमाणाः संवत्सरं सवनेष्ट्या यजन्ते । नाग्निहोत्राणि जुह्वति न दर्शपूर्णमासाभ्यां यजन्ते ।

---

१ Thus Ben and the Viv.; उपपद उपपद्भिरेतीति the other MSS.

२ Thus the Viv; यदत्र the MSS.

३ वैषुवतो: Ben.

४ Thus Be U G H M; •पिंडमवधाय Ben.

५ Thus Ben; the other MSS. om अनु; Bo defective.

६ Thus Be G U H; •वरोरभिपरिगृह्या• M (sec. m.).

७ Thus M G U Be; संनह्यविमिच Ben H.

८ •हरति MSS.

ऽथ संवत्सरतस्यां[1] पर्यवेतायां परिवृतासु वसतीवरीष्वाहृतायाऽ सुब्रह्मण्यायामपरेद्युः संवेशनीयाः समिधो ऽभ्याधायैषाबर्हिः संनह्य पयाऽसि विशिष्योपवसन्त्यथ श्वो भूते[2] ऽभिजितेह्योत्तिष्ठन्ति[2]। ॥ २७ ॥ सप्तदशः ॥

106. 8. अथ वै भवति छन्दश्चितं चिन्वीत पशुकाम इत्यभ्यादानप्रभृतीन्मन्त्रान्साधयेदा[3] वायव्यात्। प्रत्यचं वायव्येन पशुना यजेत प्रत्यचं दीचणीययोखाभरञ्जनप्रभृतीन्मन्त्रान्साधयेदा वात्सप्रविष्णुक्रमेभ्यः। प्रत्यचं वात्सप्रविष्णुक्रमैः क्रमित्वा निगदेदेवेतरान्मन्त्रान्विहरेदग्निऽ[4]। रूपाणि[4] दर्शयेद्यद्येद्रिरिणं। तत्र नैर्ऋतान्मन्त्रान्निगदेत्स[5] प्रत्यचं गार्हपत्यमुपतिष्ठेत। प्रत्यचं प्रायणीयया। प्रत्यचमातिथ्यया। कार्ष्णाजिनीप्रभृतीन्मन्त्रान्साधयेदा[6] कर्षणवपनाभ्यां। प्रत्यचं कर्षणवपने। प्रथमां

---

१ Thus emend[illegible]र्यां Be U H, ०वत्सरतस्या G Ben.

२ Thus Ben[illegible]m.); भूतेष्वोत्तिष्ठंति U, भूतेयोत्तिष्ठंति H Be, भूते इष्टौत्तिष्ठंति[illegible] pa de[illegible]

३ Correct तानि जानीयान्मी[illegible]यापस्यादानं० the other MSS.; The Vivara[illegible]ध्यादान० (sic), cp. X. 2 : 2. 3.

४ Doubtful; G (sec. m.) reads[illegible] as given in our text and cp. the Vivaraṇa विहरेत् चिनुयादग्निम्; [illegible]विहरेदग्निंतद्रूपाणि Ben, विहरेग्नींद्रूपाणि Be, विहरेदग्नोद्रूपाणि H U, विहरेद[illegible]ोद्रूपाणि M; the comm. on the Sulba cites the passage with चग्निरूपाणि।

५ Emended, नैर्ऋतीन्मंत्रा० M Be G (sec. m.), नैर्ऋतिमंत्रा Ben U, नैर्ऋतिमंत्रा० H.

६ Thus (कार्ष्णाजिनी०) M Be H U (cp. X. 23 : 21. 17); ०जिनि० G (sec. m.) ०जिन० Ben.

चितिꣳ सपुरीषां निगदेदेवं द्वितीयामेवं तृतीयाꣳ । सर्वां[१] चितिꣳ सपुरीषाꣳ सवर्ज्जां चितिꣳ सपुरीषां[१] निगदेद्या[१] अहान्तःमार्जीका[२] आऊतयः स्युर्जुहुयादेव ता । अथ य औत्तरवेदिका मन्त्राः स्युर्निगदेदेव तान् । ॥ २८ ॥

अग्निहोत्रं वै दशहोतुर्निदानं दर्शपूर्णमासौ चतुर्होतुरित्येक आनुपूर्व्यं[३] ब्रुवते । उपाप्युदाहरन्त्याग्न्याधेयं पूर्वस्यां तताऽवेकादशमयाजꣳ सर्वꣳ सहोत्पन्नन्ततः षड्ढोतेति । पाण्मास्य[४] एष पशुबन्ध उक्तो भवत्यथाप्युदाहरन्ति षट्सुषट्सु मासेष्वाहिताग्निना पशुना यष्टव्यं भवत्युभे काष्ठे अभियजेत । माघमासे[५] धनिष्ठाभिरुत्तरेणैति भानुमानर्धाश्लेषस्य श्रावणस्य दक्षिणेनोपनिवर्तत इत्येते काष्ठे भवतस्तदन्ततो ऽनीजानस्य[६]

---

१ The reading of this passage is wholly uncertain; I have accepted the reading of M (on which cp. [illegible] 25 and 26); सर्वांचितिः सपिंडां चितिं सपुरीषां U H; सर्वांचितीः सपि[illegible] र्यां G, सर्वांचितीः संपिंडां - - - चितेसपुरीषां Be, सर्वांचिते[illegible] देशं [illegible] माषाभ्यां रीषां Ben.

२ Thus G (sec. m.), which [illegible] other MSS. exc. U, reads °चांतःमा° instead [illegible] त मार्जिका G (pr. m), निगदेदेवंयाश्चाचांतः मार्जीका M., निगदेदेयाचांताः मार्जिका H, निगदेदेवंयाचांतः मार्जिका U, निगदेदेवं - - - चांताः मार्जीका Be, निगदेदेवंयाश्चांताः मार्जीका Ben.

३ Thus M Ben U G (sec. m), °पूर्वं Be, चनुपूर्वं H G (pr. m.).

४ Thus Be U G and the Viv. (one copy); षण्मास्य M H Ben and the Viv. (another copy).

५ °मासेन Ben U (sec. m.).

६ Are we to read with the Vivaraṇa ऽनीजानस्य ?

II. 6. संवत्सरो नातीयादथ चातुर्मास्येषु सोमेषु पञ्चहोता सप्तहोतु
स्थानं प्रत्येत्यथ य एष चातुर्मास्यसंयोजनो निर्मन्थ्य उत्सीद-
त्येष पशुसंयोजन एव[1] भवति । परिधौ पशून्नियुञ्जीतेति[2]
J. 17. ब्राह्मणमेतद्रूपा एव तदस्माकं भवन्त्यथ[3] महापितृयज्ञे सौर्यं
बर्हिर्भवति न वेदिमालिखति न स्तम्बयजुर्हरति नाघ्यानि
स्तृणीते । स यत्र तृतीयसवने धिष्णियान्विहरति तदजस्रं
मार्जालीयं करोति । महाहविर्भिश्चरित्वा समासन्नेषु हविःषु
गार्हपत्ये महापितृयज्ञहवींष्यपि श्रपयित्वा तैर्मार्जालीये प्रच-
रेदाहवनीये माहत्या प्रचरेदन्तमेवावभृथः[4] परीयात्तस्य प्रथमा
चितिः पुरीषवती[5] मन्त्रवती भवतीति । प्रथमैवास्य चितिः
पुरीषवती मन्त्रवती भवत्यथेतरास्तूष्णीका । यांयां चितिं
सपुरीषां भुवते सासैवास्य चितिः पुरीषवती मन्त्रवती भव-
त्यथेतरास्तूष्णीकाः । ॥ २८ ॥ अष्टादशः ॥

43. 1, 1 अथेम एकाहास्तेषां यान्यहान्यनादिष्टान्यग्निष्टोमा इत्येव
तानि जानीयादथाहीनरात्रिसत्त्रेषु यान्यहान्यनादिष्टान्युक्थ्या
4. 12. इत्येव तानि जानीयान्माध्यंदिनीया एवैनं चमसा निम्रजन्तो

---

१ एष the MSS.

२ पशुं instead of पशून् M.

३ Thus M G U H Be; एतद्रूपा एवतस्माकं भवत्यथ Ben.

४ Thus Ben (only चरेत् instead of प्रचरेत्); चरेदंतमेवावभृथः G H, चरेदंतमेवावभृथ: U, चरेदंतमेनावभृथ. Be, प्रचरेदंतमेनवावभृथा M; cp. XXVI. 25 : 308. 3.

५ सपुरीषवती MSS.

यन्तीति[१] । सदस्यासीनं माध्यंदिनीया एवैनं चमसा निष्ट-
II. 344. 13. जन्तो यन्ति सचार्थाश्चतुर्विंश एष भवति । शुक्रामन्थिनोः
II. 345. 4. संस्रावेणाभिषिञ्चतीति । यजमानायतन आसीनं शुक्रा-
II. 345. 9. मन्थिनोः संस्रावं समानीयाभिषिञ्चति[२] । चतुष्टोम एष
भवति । सप्त हवींषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो
ऽष्टाकपालः पौष्णश्चरुः सावित्रो[३] द्वादशकपालस्त्वाष्ट्रो ऽष्टा-
कपालो वारुणो दशकपालो वैश्वदेवश्चरुर्मारुतः सप्तकपाल
II. 346. 4. इत्यंशो हवींषि प्रातःसवनीयाननुवर्तन्त इत्याग्नेयो ऽष्टाकपालः
सौम्यश्चरुः सावित्रो[२] द्वादशकपालो बार्हस्पत्यश्चरुरग्नीषोमीय
एकादशकपालः सारस्वतश्चरुर्वारुणो[४] दशकपालो द्यावापृथिव्य
II. 346. 17 एककपाल इति । यत्किंच राजसूयस्तेमोमं तत्सर्वं भव-
तीति । मारुतं चात्रैकविंशतिकपालं प्रतिषेधयन्त्यौपसदा-
II. 347. 14 श्चेष्टीरर्धचतुर्दशैरेव[५] मासैः संतिष्ठते । यत्किंच राजसूयमनु-
त्तरवेदीकं[६] तत्सर्वं भवतीति । द्विपशुं चात्र पशुबन्धं प्रतिषेध-
II. 348. 19. यन्ति[७] चातुर्मास्यानि चार्धर्धनैव[८] मासेन संतिष्ठते । सिद्धे

---

१ इति om. M Ben U.

२ Thus G H U Be, समवनीया॰ M, च्यवनीया॰ Ben.

३ The words द्वादश॰ unto सावित्रो (incl., l. 6) are given only by Ben, which, however, reads सावित्रो दशकपा॰ instead of सा॰ द्वादश॰।

४ Thus Ben, वारिवश्च the other MSS

Thus M Ben; ॰षेधंन्तो॰ Be U H, ॰षेधयन्तोन्तो॰ G.

॰वैदिकं all, but cp. T Br. II. 7. 5. 2.

Thus Be, ॰धंति the other MSS.

Thus G only; माच॰ all the other MSS.

350.14. व्याघ्र उत वा पृदाकाविति। किंदेवत्या उ खल्वियमाहुति-
र्भवतीति। ॥ ३० ॥

354.16. इन्द्राणीदेवतेत्येव[1] ब्रूयात्सप्तदशिना पशुबन्धेनेष्ट्वोखाः
संभृत्य पशुशीर्षाणि च वायव्येन पशुना यजेतापि वा पुरस्ता-
देव तूष्णीं[2] संभृताः[3] संभृत्य मन्त्रवतीं मृदं संभृत्य तयानु-
356.8. प्रलिप्य[4]। नियुनक्त्युक्थ्यस्योपयामगृहीतोऽस्यग्नये त्वा बृहद्वते
वयस्वत उक्थायुवे यत्ते अग्ने बृहद्वयस्तस्मै त्वा विष्णवे त्वा
जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनिरग्नये त्वोक्था-
58.14. युव इति। नियुनक्ति ध्रुवस्य मूर्धानं दिवो अरतिं पृथिव्या
मघवन्नमृताय जातमग्निम्[5]। कविं सम्राजमतिथिं जनाना-
मासन्ना पात्रं जनयन्त देवाः॥ उपयामगृहीतोऽसीन्द्राय
त्वा मघवते जुष्टं गृह्णामीति। परिमृज्य सादयत्येष ते योनि-
359.3. रिन्द्राय त्वा मघवत इति। नियुनक्ति पात्नीवतस्योपयाम-
गृहीतोऽसि बृहस्पतिसुतस्य त इन्दो[6] इन्द्रियावतः पत्नीवन्तं
ग्रहं गृह्णामीन्द्राय[7] पत्नीवात इति। नियुनक्ति हारियोजन-

---

१ इंद्राग्नी॰ Ben.

२ तूष्णीमेव M.

३ संभृतां all, but cp. the Vivarana· तूष्णीं संभृता उखा संभृत्य।

४ Thus M, तयानुप्रपल्पिय Be, तयानूपलिप्य G (sec. m.), तय Ben H U

५ जातमिंद्रमग्निं M.

६ Thus M G U, इंद्रो the other MSS.

७ Uncertain, ॰मींद्रा३र G (sec. m.), ॰मींद्यार Be, ॰मींद्रायार H ॰मींद्रग्न्यार U, ॰मीन्द्राया - उ Ben, ॰म्यग्नाए M.

स्योपयामगृहीतो ऽसि रोहिदसि रोहिद्धोजनो रोह्यो स्थाता वज्रस्य भर्ता पृश्नेः प्रेता तस्य ते देव सोमेष्टयजुष स्तुतस्तोमस्य शस्तोक्थस्य रोहिद्वन्तं ग्रहं गृह्णामि रोही स्थ रोह्योर्धाना: सहसोमा अग्नये स्वाहेति। यो ऽग्निष्टुतीन्द्रस्यांशमुत्सादयेदा इन्द्रस्तुत्यग्निस्यांशमुत्सादयेन्नित्या अन्या देवता:। किंदेवत्यानि

II. 360. 10. खल्वतिरिक्तस्तोत्राणि भवन्तीत्याश्विनानीत्येव ब्रूयाद्यच्च[1] किंच रात्रिमुपातिरिच्यते सर्वं तदाश्विनमितीन्वेकमथापरमाग्नेयं[2] प्रथममैन्द्रं द्वितीयं वैश्वदेवं तृतीयं वैष्णवं चतुर्थमिति।

॥ ३१ ॥ एकोनविंशः ॥

II. 366. 11. स सौमस्य जघन्याहःसु प्रजह्नितेषु[3] यवेष्विति। प्रमुदि-
II. 366. 12. तेष्वित्येवेदमुक्तं[4] भवत्यधिकरणेनेत्येवेदमुक्तं भवत्यृत्विज:[5] पदे-
II. 367. 1. नाक्रापयतीति[6] तत्पूर्वं[7] वेत्यथैनमभ्यक्य पवयित्वोदानयतीति।

सिद्धमत्राग्निष्टोमिकं कर्म जानीयादोत्तरस्मादुपघातादेत-स्मिन्नस्य काले त्रीणि वर्षींषि यजुषा कुर्याद्दीक्षणीयाया:

१ ०स्वदि M.

२ ०मितीन्वेक०, मितीचेक०, मितिन्वेक० the MSS.

३ Thus M G (sec. m,) and the Viv.; वृक्षितेषु Be, प्रजतितेषु H U G (pr. m.), प्रजंतितेषु Ben.; the meaning is, acc. to the Viv., प्रपक्वेषु।

४ प्रमुदिते० Ben.

५ भवतीत्यृत्विज Ben.

६ पदंना-पयतीति Ben, पदंनाक्रापयंतीति Be U, पदंनाक्षयंतीति G, पदंना-क्रयंतीति H, पदंनासोदयपतीति M, but द cancelled.

७ Conjectural reading. तत्पूर्वंमभ्यथै० Ben G (sec. m), सत्पूर्वंत्वथै० Be H U M G (pr. m.).

प्रायणीयाया आतिथ्याया इत्येष निर्वपेद्दीक्षणीयां प्रायणी-
यामातिथ्यादाज्येन[१] वर्तयेद्यावद्रथा[२] आगच्छेयुः[२] सहनिरुप्त-
माज्यं तिसृषु स्थालीषु विग्रहीयाद्यां दीक्षणीयायै मन्स्या[३]
तया[३] दीक्षणीयां संतिष्ठापयिषेत्प्रणीताभिः प्रायणीयस्य
368.2 प्रतिपद्येतैष[४] एवातिथ्याया उपक्रमो भवतीति । त्रिवत्सेन
माण्डेन वत्सतरेण राजानं क्रीत्वोह्यातिथ्य निर्वपतीति । त्रि-
हायणेनेत्येवेदमुक्तं[५] भवति[६] । कथमु खल्वस्य मन्त्रानभिनमये
368.3 च्चिदसि[७] मनो[८] ऽसि[८] धीरसि दक्षिणो ऽसि यज्ञियो ऽसि
क्षत्रियो ऽस्यदितिरस्युभयतःशिराः[९] स नः सुप्राङ् सुप्रत्यङ्
संभवेत्येकगणा[१०] उपसद्‌गो भवन्तीति । पूर्वाक्षिका एवैता उक्ता
368.13 भवन्ति । खलेवाली यूपो भवतीत्येतामेवैषां[११] मेथीं कुर्वन्ति ।

---

१ २ Thus Be U H •थ्यामाज्येन G, •थ्योपुषदाज्येन M, Ben utterly corrupt

२ Thus the Vivarana, all the MSS are hopelessly corrupt, G has the least corrupt reading यावंद्रथमागच्छेयु ।

३ Thus M G U Be, संस्थाया H, सख्यान Ben

४ Thus M G U, प्रतिपद्यश्चेतैष Be Ben, प्रतिपद्यतैषपया H.

५ •हायनेनै• MSS exc Ben

६ भवतीति MSS. exc M

७ •भिमंत्रमये• G

८ मनासि MSS exc. H

९ Thus Be G U Ben, •शिरो H, •शीर्षासि M

१० •सुपा MSS.

११ •न्येतयैवैषां Ben, are we to correct : •त्येतामेवैषां (sic) ~ Viv. एतामेव यज्ञेवामार्धं कुर्वन्ति ।

स खल्वेषाखौ यूपस्तंस्थे कटे परमिव चषालभाजनं भवतीत्या-
II. 369. 1.कुट्ट[1] इत्येवेदमुक्तं भवत्यथैतान्पशूनुपाकरोत्यग्नीषोमीयमाग्नेय-
मनूवन्ध्यमिति । यमा एवैते छागाः समानयोनयो भवन्ति ।
तेषामुक्तं चरणमथास्याऽ मद्यस्क्रियामनुक्रियां परिक्रियामति-
क्रियामवभृथप्रभृत्यस्तमिते[2] यज्ञपुच्छं । तासां प्रथमैव सरथा[3]
प्रथमा चित्ससोमक्रयणी प्रथमाग्निहोत्रोच्छेषणव्रतोथास्याऽ[4]
मद्यस्क्रियामनुक्रियां परिक्रियामतिक्रियां चित्तनदिस्तनैक-
स्तनव्रतस्य[5] रूपाणि[5] कुर्वन्ति । क[6] उ[6] खल्वेकाहे दृष्टः[7]
संनिवापो भवतीति । व्रात्यस्तोमे चेन्द्राग्न्योश्च कुलाय इत्येव
II. 371. 5.ब्रूयादथाभिन्नव्रात्यस्तोमे[8] बहव एकस्मै दीक्षन्ते[9] । अदीक्षिता[10]
II. 371. 8.एवैनान्याजयन्ति[10] । दण्डोपानहऽ[11] माक्षुलाजिनमिति । धा-

---

१ Thus G M Ben, •कट U H, •कुट Be; the Vi reads चाकुठ and details चाद्दतस्थानं निम्नकृतम्।

२ Instead of चतिक्रियाम् here and l. 7 the MSS. read चधि•, चवि• or इति•।

३ Thus corrected, सरथा Be M G, सुरथा H U, सपथा Ben

४ Corrected, •पयवाह तोमंथास्थां M G U Be, •पयवक्षतमथास्थां H Ben.

५ Corrected, •कस्तनव्रतरूपाणि Ben H, •कहनस्य रू• M Be G U.

६ Thus M G Be U, कव H क Ben

७ दृष्टः Ben, दृष्ट Be

८ Thus M Ben, •चैतभिन्ना• the other MSS.

९ Thus M G. दीक्षते Be U H, एकस्मिन्नदीक्षते Ben.

१० दीक्षित ... जयति H.

११ ? दंडोपानदं G (sec m.) Ben, दंडोपदनं G (sec m.), दंडोपनदनं Be, दंडोपनदन H. दंडोपिनदनं M

क्षुल्लकानामु[1]ह दर्भमिश्राः[2] कम्बला भवन्ति स च भवति[3] श्वेतं[4] चौरश्वाजिनम्[5] । ॥ ३२ ॥

374 3, 4 स एष[6] ज्येष्ठानामग्निष्टोम । एष एव सन्कनीयसामुक्थ्य-
386. 6. र्यांतुष्टोमं पूर्वमहर्भवति पञ्चस्तोममुत्तरं[7] । रथो हविर्धानं ।
386 8 कुर्यात्तन्यत्रूपमुत्तरं हविर्धानमुत्सीदेयुः शकटमन्त्रा । द्वौ त्रय-
स्त्रिꣳशौ मध्यत स्तोमौ भवत इति । पृष्ठ्यस्तोमावेवैतावित-
रथामुतस्य[8] प्रतिलोमौ[8] भवतो । ऽमावास्यायां[9] प्रतिममस्य
383 10 चान्द्रमसं पिण्डपितृयज्ञं दद्यात्तं ब्रह्मणः मन्त्रं पर्युपविश्य
भक्षयन्ति यद्हुत मन्यन्ते तेन ब्राह्मणं । ब्राह्मणो वै वर्णानाꣳ
श्रेष्ठो[10] ऽग्निर्देवानामित्येतेन वा भक्षयेदपि त्वा व्याहृतीभि-
383 12 रग्निष्टोम एष भवतीति[11] चतुरुत्तरीय[12] एष[13] दिशां चतु-

---

१ Thus M Be and Viv , मासुल्लाका° the other MSS

२ Corrected according to the Viv दर्भमिश्रा M G (sec m ), दर्भमि Ben, गर्दभमिश्रा Be U H

३ भवंति MSS

४ श्वेतं MSS

५ चोर° Ben ( च चौरश्व अजिनम् । )

६ °एष Ben and Viv , एव the other MSS

७ Thus M only , °मुत्तरमथा the other MSS

८ Thus M G (sec. m ) Be Ben ; °तथाप्रति° U H G (pr. m.).

९ Refers acc. to the Vivarana to the दुरश (XVIII, 37).

१० Thus M Ben, श्रेष्ठो G U Be H

११ Ben om. इति, rightly ?

१२ Corrected , °रुत्तरीयादेष M G U Be, °त्तरीयादेष H, °त्तरायादेष Ben

II 393. 6 होमो भवत्यथास्मिन्कानान्ध्ययज्ञे[1] ऽवभृथप्रभृत्यस्तमिते यज- II 395 8 पुच्छं । तस्य दशसु बहिष्पवमानः शते सहस्रे ऽयुते नियुते प्रयुते[2] ऽर्बुदे न्यर्बुदे समुद्रे मध्ये ऽन्ते परार्धे पद्दे[3] पद्मे नित्यमुक्ता[4] मनसैव स्तुवानो मन्यत एतावति[5] से स्तुतमित्यथ महाप्रवर्ग्य II 405. 18 एकमेवाग्निहोत्रमथास्मिन्कुनखकर्णयज्ञे । तिलमिश्रमशिला म- ल्यास्तादिला[6] चारमात्रं[7] पिबेदथ ग्रामपथे प्रविशेत्स्वप्नादेव II 406 8 स्वप्ने गच्छति । राशिकृतं[8] धान्यं ददाति मरायकृतं धान्यं II. 407 4 ददातीति । मूलकृतमित्येवेदमुक्तं भवति । प्रचरन्ति प्राञ्चः प्रत्यञ्चः प्रचरन्तीति । यः प्रत्यङ् विहारो दक्षिणतउपचार एष भवत्येतेनैवापि सर्वतोमुखो व्याख्यात । एतेन सहस्र- शालो । ऽथैनमिहह[9] पवयित्वामुत्र पवयन्तीति[10] । सिद्धमचा-

---

१ काण्ड° (or कानाद°?) M

२ Om. G U

३ पद्दे G U Ben and probably also M, पद्मे Be, द्दे H, are we to correct here and XVIII. 43. बद्दे?

४ Thus Ben, नित्यमुक्ता the other MSS

५ Thus M G U, एतावतिमेव H, एतावतीमे Be, एतावतीमेव Ben.

६ °स्तादिला H.

७ Thus G U, °मात्र M, चारमात्र H, चरम Ben, मचारमात्रं Be.

८ राशी° G Be U H

९ Conjectural reading, वैनमिह MSS (वैनमूह M). I have not been able to point out the passage in the text proper here referred to.

१० °यन्तीति G (sec. m.) Be.

312 4. ग्निष्टोमिकं कर्म जानीयादुत्तरस्यैव[1] शालायै स द्वौ त्रिरात्रौ[2] कुरुत एकं च द्विरात्रमिति[3] । द्वौचोपसद्भिरेवास्यैतान्यहान्यभिविधत्ते । ऽहीनविधौ[4] ऽति यज्ञं दद्यात्तदिदं[4] प्रोक्तं यद्कृष्टं सूत्रतः । सामयिकं त्वेव क्रतुयोग[5] यज्ञे यज्ञमुपलक्षयेतेति बौधायनो यज्ञे यज्ञमुपलक्षयेतेति बौधायनः । ॥ ३३ ॥ विंशः ॥

॥ इति षड्विंशः प्रश्नः ॥

। कर्मान्तः समाप्तम् ।

---

१ Thus the MSS , read •दुत्तरस्यै च ?

२ द्विरात्रौ G U

३ त्रिरा• MSS exc. M

४..४ Wholly uncertain, •ह्रीनविधौतियज्ञदद्यात्तदिदं G, ह्रौनविधौतियज्ञं दद्यात्तदिदं U, ह्रौनविधौतियज्ञदद्यात्तदिद Ben Be, ह्रौनविधौतियज्ञं दधातोदं H, ह्रौनविधोतियज्ञं दद्यात्तिदिदं M. The Viv. seems to point, at least also to the reading यज्ञं दद्यात् ।

५ Thus M G U H, क्रतुयेमं Be, क्रतुयेमं Ben

# प्रायश्चित्तसूत्रम् ॥

अथातो मन्त्रगणाम्नातानि प्रायश्चित्तानि व्याख्यास्यामः । सर्वत्रोपरिष्टान्मन्त्रकृतं यद्यधस्तान्निपतेद्भूमि प्रतिष्ठा मनस इत्येतया प्रतिष्ठापयेत्तयैव स्रुवाहुतिं जुहुयाद्धुत्वा वा[1] प्रतिष्ठापयेद्धुतानन्तरं[2] कर्म कुर्यादेवमन्येष्वप्यतिक्रान्तं कर्म नाद्रियेत यद्यर्थलुप्तं भवति । सर्वत्राश्रावितप्रत्याश्रावितवषट्काराणामत्यक्तानुक्तहीनेष्वाश्रावितमत्याश्रावितमित्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवोच्चारणेषु[3] भागिनीं देवतामनुच्चारयित्वा[4] योन्यामुच्चारयेद्यद्वो देवा अतिपादयानीत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र देवतावाहनेषु भागिनीं देवतामनावाहयित्वा योन्यामावाहयेदेतयैव स्रुवाहुतिं जुहुयाद्यच्च स्मरेत्तदुपोत्थायैनां मनसावाहयेद्यातिरिक्तामाज्येन यथोढां यजेत । सर्वत्र प्रणीतानां प्रणीयमानानां प्रणीतानां[5] वा यदि[6] विप्रुषो[6] विपतेयुः[6] स्वेदा चमस[7] आपो[7] हि ष्ठा मयोभुव इति तिसृभिरद्भिः पूरयित्वा ततं म आपस्तदु तायते पुनरित्ये-

१ Om H

२ Thus H U C' B Viv., हुतावानन्तरं Tr.

३ Thus H U B, देवतोच्चरणेषु C', ॰चारणे Tr.

४ देवतामुच्चा॰ B

५ प्रणिहितानां H B.

६ Thus Tr., विप्रुषो यदि पतेयुः the other MSS,

७ Thus C' H, चमसं आपो U. चमसमापो B, चमसाआपो Tr.

तथा स्रुवाहुतिं जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि सूर्यो नाविर्भवत्यन्यत्रादेशादुदयं[1] तमग्ने त्वं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयाद्यदि सूर्याचन्द्रमसोर्ग्रहणं[2] विद्यत एतदेवाथ यदि यजमानस्त्विर्जो वा स्वप्ने रेतोविसर्गः स्यादिमं मे वरुण तत्त्वा यामीत्येताभ्यां स्रुवाहुती जुहुयात्सर्वत्र[3] हविर्देवतायाज्यापुरोनुवाक्याहुतीनां हुताहुतसंदेहेष्वन्तरिते विपर्यासे च त्वं नो अग्ने स त्वं नो अग्न इत्येताभ्यां स्रुवाहुती जुहुयात्सर्वत्र दर्विकूर्चप्रस्तरपरिधिबर्हिर्विधृतिपवित्रवेदोपवेषेध्मद्रव्यसंभाराणां[4] छेददाहोपघातेषु नाशे विनाशे वान्यं यथालिङ्गं कृत्वा यथालिङ्गमुपसाद्य त्वमग्ने अयासि प्रजापत इत्येताभ्यां स्रुवाहुती जुहुयात्सर्वत्र वितते यज्ञकर्मणि ॥ १ ॥

यदि पुरा प्रजाजेभ्यो वह्निःपरिश्वङ्गारा अभिपर्यावर्तेरन्नाह्मणोक्तं प्रायश्चित्तं कृत्वेमं जीवेभ्यः परिधिं दधामीत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि यज्ञमेष आगच्छेद्दिष्टेभ्यः स्वाहा[5] वषडनिष्टेभ्यः[5] स्वाहेत्येतैरष्टाभिः[6] स्रुवाहुतीर्जुहुयात्सर्वत्र वितते यज्ञकर्मणि यदि जन्यं भयमा-

---

१ Thus U C' Tr Viv., •न्यत्रदेशा• B, न्यत्रादशा॰ H.

२ Thus C' U Viv ; स्वर्याचद्रमसोर्ग्र॰ B, ॰स्वर्याचंद्रमसोय• Tr H.

३ B U ins. वितते यज्ञकर्मणि ।

४ दर्वि• Tr C' U Viv, दर्वी B H and Pray. [illegible] of •वेदोपवेषेध्म• Tr B read वेदेध्मोपवेष• ।

५ Om. Tr

६ •त्यष्टभिः C', •त्येताभिः Tr

गच्छेयन इन्द्र भयामहे स्वस्तिदा विशस्पतिरित्येताभ्याꣳ स्रुवाहुती जुहुयादभये वा पुनर्यजेत । [१]सर्वत्रोपांशुप्रभृति वाच[२] स्थानानाꣳ स्वरावरपदहत्तभ्रेषेष्वाभिर्गीर्भिर्यदतो न ऊनमित्येतया स्रुवाहुतिं जुहुयात्सर्वत्रानाज्ञातप्रायश्चित्तेष्वनाज्ञातं पुरुषसमित इत्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वत्रेष्मावर्हिषः प्रयाजानूयाजानां[३] पाकत्राकर्मसु[४] यत्पाकत्रा मनसेत्येतया स्रुवाहुतिं जुहुयात्सर्वत्र स्कन्ने भिन्ने छिन्ने भग्ने[५] नष्टे[५] वामे विपर्यास उद्दाहे[६] ऊनातिरिक्ते वा[७] यत्र आत्मनो मिन्दाभूत्पुनरग्निश्चक्षुरदादित्येताभ्याꣳ स्रुवाहुती जुहुयात्सर्वेष्वभ्युपघातेषु पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया समिधमादध्यादेतयैव स्रुवाहुतिं जुहुयात्सर्वेषु यज्ञक्रतुषु पर्वौः संयाज्य प्राड्त्य ध्रुवामाप्याय्य ध्रुवातः सर्वप्रायश्चित्तानि जुहोति ब्रह्म प्रतिष्ठा मनस इत्येतेनानुवाकेन सत्यृचमेव वै भवति समिष्टयजूꣳषि जुहोति यज्ञस्य समिष्ट्यै । यद्वै यज्ञस्य क्रूरं यद्विलिष्टं यदत्येति यन्नात्येति यदतिकरोति यन्नापिकरोति ॥

---

१ In H U the prāyaścitta सर्वत्रेष्मावर्हिषः (l. 5) is given here, but cp T. Br. III. 7. 11. 5.

२ वाचि U, वाचि H

३ °नुयाजा° H Tr.

४ पाकयज्ञकर्मसु B Tr

५ Om. Tr, B; the last om. also भिन्ने छिन्ने।

६ [?] उद्दाह Tr, दुराहो H, उद्दाह B U, विपर्यासेदुरदाहे C[?] the Vr. explains as उद्देषने।

७ Om. Tr.

तदेव तैः प्रीणातीति ब्राह्मणमेतान्येव ब्राह्मणविधिविहितान्याप्यायनानि[1] मन्त्रवन्ति[2] भवन्तीति बौधायनो मन्त्रगणाम्नातानि नैमित्तिकानीति शालीकिः ॥ २ ॥ **प्रथमः** ॥

अथ कपालकरणे रथचक्रचित्याकृत्यश्वशफमात्रꣳ स्थानं कल्पितं भवति संकल्पो[3]ऽधिकारः कपालवृद्धिः कपालह्रासो वा कपालानामनभिप्रथने व्याहृतीभिराहवनीये स्रुवाहुतीर्जुहुयाद्भूर्भुवः सुवरित्येतावदेव नानाप्रथने चातिप्रथने चाथ हविषामशृतनद्धवदाहोत्सेकनिस्रावे[4] प्रायश्चित्तिरशृते रुद्राय स्वाहेत्याहवनीये[5] स्रुवाहुतिं जुहुयाद्दग्धे वायवे विदग्धे निर्ऋत्यै यदि दग्धꣳ स्याद्यत्तत्र[6] शृतꣳ स्यात्तेन[7] प्रचरेदथ यदि सर्वमेव दग्धꣳ स्यादपोऽभ्यवहृत्य मिन्दाहुती जुहुयादथान्यं निर्वपेदाज्येन वा प्रचरेत्सैव ततः प्रायश्चित्तिर्यस्यैयस्यै[8] दिश्युत्सिच्येत तस्यैतस्यै देवतायै स्रुवाहुतिं जुहुयाद्यदि प्रागग्नये यदि दक्षिणतो यमाय यदि पश्चाद्वरुणाय यद्युत्तरतः

१ U ins. sec. m. नित्यानि. B ins. प्रायश्चित्तानि नित्यानि।

२ मंत्रवर्ज्जवन्ति B and U (sec. om.)

३ संकल्पे B.

४ °स्रावेषु Tr.

५ आहवनीये om. Tr. B.

६ Thus C' Tr. and Viv., स्यात्तत्र H, स्याद्यद्यत्र B U.

७ अथ Tr. ins. after स्यात्।

८ Thus also the Vivarana

सोमायाथ[1] यदि सर्वत एवोत्सिच्येतैताभ्यः सर्वाभ्यो देवताभ्यः स्वाहुतीर्जुहुयात्संमार्ष्ट्येनाप्यायनीभ्यामाप्याययत्याप्यायस्व सं त इत्यथ हविषामुद्वासनकाले पतनस्खलनखण्डनोद्वर्तनसंसर्पणविपरीतव्यवायकरणेषु[2] [3]व्याहृतीभिराहवनीये स्वाहुतीर्जुहुयाद्भूर्भुवः सुवरित्यथान्तरेण वेद्युत्करावुदङ्ङुपनिष्क्रम्य तमितोऽदङ्ङुपनिःसृप्य[4] व्याहृतीरुक्त्वा व्याहृतीभिरेव प्रतिपद्यते[5] । ॥ ३ ॥

व्याहृतयस्तु[6] चतुष्पादा सर्वाः सप्ताक्षराः ।
चतुर्णामपि वेदानामादिमध्यावसानिकाः[7] ॥
मन्त्रोनं वातिरिक्तं वा दुरिष्टं वापि यद्भवेत् ।
अपोहयन्ति[8] पाप्मानं तस्माद्व्याहृतयः स्मृता इति ॥

यद्युक्तो यज्ञश्लेष आगच्छेद्भूरिति गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव इत्यन्वाहार्यपचने । यदि सामतः सुवरित्याहवनीये । यदि सर्वतः सर्वा जुहुयात् ।

---

१ अथ om. B U

२ Instead of ॰स्खलन॰ B काखन॰ ।— Before संसर्पण॰ B U have चलनक्षेपन॰ ।

३ Before व्या॰ A B ms प्रायश्चित्तं, C' प्रायश्चित्तिः ।

४ Thus U C', ॰परिसृप्य H (pr m ), ॰सृप्य Tr H (sec. m.), उद्धृ॰ त्याप्य B.

५ ॰पद्यते Tr H, ॰पद्येते B U C' (प्रतिपद्येत् the Viv )

६ व्याहृतीश्च U only

७ ॰सानकाः H U.

८ Thus H U B C', पोहन्ति च Tr.

उद्धृते तु पुरोडाशे वेपिते स्यन्दिते[१] तथा ।
भिन्ने सꣳसर्पणे चापि[२] प्रायश्चित्तं कथं भवेदिति ॥

विज्ञायते

उद्धृते तु[३] कुलꣳ हन्याद्वेपिते नश्यति प्रजा[४] ।
भिन्ने सꣳसर्पणे चापि यजमानः प्रमीयत इति ॥

अथ[५] पतनफालनखण्डनोद्वर्तनसꣳसर्पणेषु[६] प्रसिद्धमुद्वास्य बर्हिषदं कृत्वा प्रभूतेन सर्पिषावसिच्याभिमन्त्रयते किमुत्पतसि किमुत्प्रोष्ठाः शान्तः शान्तेरिहागहि[७] । अघोरो यज्ञियो भूत्वासीद सदनꣳ स्वमासीद सदनꣳ स्वमिति । ब्रह्मणे वरं दत्वान्तर्वेद्यासादयेत्तस्याꣳ सꣳस्थितायाꣳ सुरभिमतीं निर्वपेत्तस्याꣳ सꣳस्थितायां तन्तुमतीं निर्वपेत् ।

आयुष्मत्यस्तु कर्तव्या उत्तराश्छन्दसः[८] क्रियाः ।
हविर्भ्रेषविधिस्त्वेष[९] विहितस्तत्त्वदर्शिभिरिति ॥

---

१ संदिते Tr C

२ वापि U

३ Thus C' U Tr, नु H, B om

४ प्रजाः U C'.

५ Instead of अथ Tr प्राप्यम् ।

६ B again ॰क्षालन॰ instead of ॰फालन॰ ।

७ शान्तेरि॰ Tr

८ ? Thus U Vjv. (sec. m.), ॰राश्छन्दसः H, ॰राश्छांदस॰ C', ॰रार्श्छदस Vjv (pr. m.) Tr B.

९ पविर्भेष॰ Tr.

स्कन्ने प्रस्रणनिर्वापे[1] द्रव्याणां चानुमन्त्रणे ।
यस्मिन्काले विजानीयात्तत्कुर्यात्कर्मसंस्तरे[2] ॥
प्रणवो व्याहृतयश्चैव[3] यज्ञ एष परो ऽवरः ।
तस्माद्यज्ञस्य यत्स्कन्नं विपरीतं च यद्भवेत् ।
तत्सर्वं व्याहृतीभिः[4] कुर्यादन्यत्र च वषट्कृतात् ॥
अज्ञानद्भिः कृतं यच्च त्वरमाणैश्च यत्कृतम् ।
व्याहृतीनां प्रयोगेण यत्कृतं कृतमेव तदिति ।
कपालानां प्रमाणानि ब्रूयादाध्वर्यवे विधौ ।
समानि चतुरश्राणि ह्यङ्गुलानि समन्ततः ॥

हविर्विकाराणां प्रमाणेन समविषमाणि[5] वर्धयन्तीति[6] बौधायनः ॥ ४ ॥ द्वितीयः ॥

अथारणिगतानामात्मगतानामजस्राणामन्वाहितानां[7] स-वनगतानां चाग्नीनामुद्वातानां[8] प्रायश्चित्तिररणिगतं मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतु-

---

१ प्रस्रणनि० Tr

२ ? Thus Tr B, स॰स्मरेत् C', संचरेत U H

३ Thus H Tr C', °हृतिश्च B U

४ Thus Tr, ०तिभि H C' U (pr. m.), ०हृतिः B, ०हृति U (sec. m.)

५ स ins. Tr B U (sec. m.).

६ Thus Tr U (sec. m.), वर्धयन्तीति B, वर्धयेदिति C' H U, the Vivarana periphrases छेदयन्ति।

७ अजस्राणाम् om T

८ वाग्नी० U H.

गृहीतं गृहीत्वाहवनीये संततौ[1] जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्येतत्प्रायश्चित्तमनुगते ऽस्तमिते ऽभ्युदिते ऽभिनिम्रुक्ते चैतत्परिवित्तस्यैतत्परिविन्नस्यैतत्परिविविदानस्यैतत्सोमवामिने[2] सोमातिपविताय[3] भवान्तरितस्यैतद्व्रतचरितस्यैतत्परीष्टस्यैतत्परियष्टुरेतदेव यस्य पुरुषो रथो ऽश्वो गौर्महिषो वराहो ऽहिर्मृगः श्वा वान्यद्वा श्वापदमन्तराग्नी गच्छेदेतदेव[4] [5]यस्याग्नेरेकदेशमपहरेयुरेतदेव सर्वास्वेवाग्निहोत्रस्यार्तिषु मनस्वत्या प्रायश्चित्तिः क्रियत इष्ट्वा वसीयान्भवतीति ब्राह्मणम् ॥ ५ ॥ तृतीयः ॥

अथ दर्शपूर्णमासयोश्चत्वार ऋत्विजस्तेषामेकस्मिन्नविद्यमाने त्रयः प्रचरेयुर्द्वौ वाथ[6] यद्येक एव स्यात्पुरा प्रयाजेभ्य आज्यस्थाल्याः स्रुवेणोपघातमेकाध्वर्यवप्रायश्चित्तानि जुहोति जुष्टो वाचो भूयासं जुष्टो वाचस्पतये देवि वाक्। यद्वाचो मधुमत्त-

---

१ Thus Tr, सततिं C', संतति B U, संतति H

२ Thus (and cp Āp. IX 12 11) B, after परिविन्नस्यैतत् Tr H C' U ins परिविदानस्यैतत्, Tr reads instead of परिविविदान॰ परिविदान॰।

३ ॰पवितस्यैतत् U C'

४ After गच्छेत् H C' and U ins. the following passage (which, however, is put between brackets in U) एतदेव विप्लुत (H. C' वद्याप्लुत) पुरोपलोहितमरेतोमासाक्षिमज्ज्वामिथ्याभ्यादाने समारोप्य मथित्वा पवमानेष्टिर् (॰नेष्टिस्तद् U).

५ Before यस्य B U H C' ins अथ।

६ स found only in Tr C' and the Vivaraṇa.

म्निन्मा धाः सरस्वत्यै स्वाहा ॥ इमामेवाश्विना यज्ञस्य यद्वाचो यद्दुरिष्टम् । तदश्विनौ भेषजेन संदधाताꣳ[1] स्वाहा ॥ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवे सुहवꣳ शूरमिन्द्रम् । ह्वये नु शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः स्वाहा । यन्मे मनसश्छिद्रं यद्वाचो यच्च मे हृदः । देवास्तच्छमयन्तु सर्वꣳ सोमो बृहस्पतिश्च स्वाहा ॥ यद्विद्वाꣳसो यदविद्वाꣳसो मुग्धाः कुर्वन्त्यृत्विजः । अग्निर्मा तस्मादेनसः श्रद्धा देवी च मुञ्चताꣳ स्वाहा । यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिꣳसिम । अग्निर्मा तस्मादेनसो गार्हपत्यः प्रमुञ्चतु दुरिता यानि चकृम करोतु मामनेहसꣳ स्वाहा ॥ ब्रह्मत्वे हौत्र आध्वर्यव आग्नीध्रे याजमाने[2] चैक एव यज्ञे यत्पर्याण्वि[3] तन्मे[2] देवा रक्षन्तां प्राणान्मे मा हिꣳसिषुः स्वाहा ॥ अहं ब्रह्माहꣳ होताहमध्वर्युरहमाग्नीध्रो ऽहं यजमान एक एव यज्ञे पर्याण्वि[3] तन्मे[2] देवा रक्षन्तां प्राणान्मे मा हिꣳसिषुः स्वाहेत्यैकाध्वर्यवप्रायश्चित्तानि जुह्वदन्तर्वेद्यासीनः सर्वा देवता यजतीति विज्ञायते ।

अतिक्रान्तेषु होमेषु पर्वस्वाग्रयणेषु च ।
अरण्योर्ध्रियमाणेषु कथं तन्त्रं न लुप्यते ॥

---

१ Thus H C', संधातारौ Tr, संदधातारौ B U.

२ Om. H C Tr.

३ Thus Tr B, पर्यक्षिकमे or तन्म C' H U. I take पर्याण्वि as standing for परियाण्वि, 1st conj. praes. cp अपर्याक्ष ।

शुचिश्च पावमानौ च तन्तुमानथ पाथिकृत् ।
एता इष्टयः[1] प्रयोक्तव्यास्ततस्तन्त्रं न लुप्यते ॥
शुचिः शोधयते पापं तन्तुस्तन्त्रं न लोपयेत् ।

पथिकृत्पन्थानमारोहेत्[2] पावमानौ तु पावयेदिति नु[3] बौधायनस्य कल्पो दर्शे व्यतीते पाथिकृतौ कार्यौ पौर्णमासे व्यतीते वैश्वानरौ कार्यावुभये व्यतीत उभे[4] कार्ये बहुषु व्यतीतेष्वन्वारम्भणीया[5] स्यादिति[6] शालीकिः ॥ ६ ॥ चतुर्थः ॥

अथ यद्यरणी जीर्णे स्यातां जन्तुभिर्मन्थनेन वा समाने नवे अन्ये अरणी आहृत्यामावास्यायामुपोष्य[7] श्वो भूते दार्शेनेष्ट्वा तमग्निं जीर्णे शकलीकृत्य गार्हपत्ये प्रक्षिप्य प्रज्वाल्य दक्षिणेनोत्तरारणिमादाय[8] सव्येनाधरारणिमुपर्यग्नौ धारयन्नपत्युद्धृष्यस्याग्ने प्रविशस्व योनिमन्यां देवयज्यां वोढवे जातवेदः । अरण्या अरणिमनुसंक्रमस्व जीर्णां तनुमजीर्णया निर्णुदस्वेत्ययं[9] ते योनिर्ऋत्विय इत्यरण्योरग्नीन्समारोप्य[10] मन्थन-

१ इष्टेः प्रयुञ्जीत तत॰ Tr
२ Thus Tr, ॰मयामारोहेत् C, ॰स्थानमारोहेत् B, प्रासमारोहयेत् H U
३ नु given by U C only
४ उभये B U
५ ॰भणी Tr.
६ कार्येति U.
७ ॰आमावास्यायामुपोष्य om. Tr B.
८ ॰रणीमादाय H
९ निर्णु॰ Tr, after ॰दस्वेति H U C ins. यथा ।
१० ॰प्ति instead of ॰प्योत् B; ॰रोप्य Tr B

स्वाहुता गार्हपत्यं[1] मथित्वा[1] विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संततीं[2] जुहोति मनो[3] ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु। या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति। शरावं[4] दक्षिणां ददाति। सा प्रसिद्धेष्टिः संतिष्ठते। ॥ ७ ॥
पञ्चमः ॥

अथारण्योर्व्यापत्तिं[5] व्याख्यास्यामो। अष्टाभिर्निमित्तैर्विनश्यत्यसेधश्वचाण्डालशूद्रवायसपतितरासभरजस्वलाभिश्च[6] सꣳस्पर्शने ऽरण्योर्विनाशस्तयोरुत्सृज्य[7] समाने नवे अन्ये[8] अरणी आहृत्याग्निसहमन्वाधेयमरण्योगतं[9] पुनराधेयं नष्टारणी अप्सु निमज्जति[10] भवतं नः समनसावित्यथोत्तरां छित्त्वा भित्त्वा

---

१ Tr om. स्वा॰ म॰, B om. स्वा॰।

२ Thus Tr B U, संततिं H C'.

३ All the MSS abbreviate the mantra.

४ Thus Tr C' H and the pray. candrikā; सारावं B U.

५ अथारण्योरण्यो॰ B U C';— ॰र्व्यापत्तौ॰ Tr

६ शुभि॰ instead of श्वभि॰ Tr B U — ॰चण्डाल॰ Tr.

७ ? Thus (॰स्तयोरु॰) Tr C' and the Viv, ॰स्तयोर॰ H, ॰स्तयोर॰ B U.

८ Om. H U.

९ ? ॰सह॰ Tr C' H B and the Viv, ॰सत॰ U— ॰मारभ्या॰ Tr.— ॰रण्याभ्रतं Tr and the Viv., ॰रण्योगतं C' H U ॰रण्यगतं B.

१० निमज्जति B C', निमज्ज्य Tr H B and the Viv.

प्रकृतीकृत्य मन्थनसामर्थ्यꣳ समारोपणसामर्थ्यं मन्थनशेषं वा प्रमन्थनं[1] च कुर्यात्समस्तप्रत्यवर्जꣳ । संतिष्ठते ऽरण्योर्व्यापत्तिः । ॥ ८ ॥ षष्ठः ॥

अथ हविर्दोषान्व्याख्यास्यामो यद्येतन्नीलमक्षिकाश्मातिका[2] मत्कुणश्चैलशिरसोर्यूके[3] कीटो वा पिण्डकारी स्यात्क्षुद्रकीटमक्षिकापिपीलिकावर्जꣳ श्वमार्जारनकुलकुक्कुटमर्कटध्वाङ्क्षाखुपुरीषविक्लपदकेशमन्तनखकुनखपूतिद्रप्सस्वेदाश्रुश्लेष्माशुकासृचवध्यार्द्रमणैर्वोपहतमन्यैर्वोपहतꣳ[4] रजस्वलया वा स्पृष्टं तथाप्रयतेन[5] भ्रूणघ्नेन वा दृष्टं तथापपात्रेणासंध्ये वा देशे । स्कन्नं दुष्टꣳ हविरपो ऽभ्यवहरन्ति । शीते[6] भस्मनि वा निधापयति[7] । भिन्दाङ्कतौ कुलायान्यन्निर्वपेदाज्येन[8] वा प्रचरेदपि[9] तु[10]

---

१ Thus B H and the Viv., प्रयनं U C', प्रमंथं Tr

२ Thus (०मातिका i. e. श्याममातिका according to the Viv.), B and the Viv., ०शांनिका H C' ०मौनिका U, Tr om

३ Thus (०चैल०) U H C' and the Viv., ०चेल B, ०चेल० Tr.

४ ०स्रवष्वा० my conjecture, ०स्रवब्धा० Tr, ०स्रवथा० H, ०स्रवब्धा U, ०स्रवया C', ०बर्धा० B.; the Viv.. स्रवथु च्युतं ।

५ ०प्रयतेन H; स्वप्रयतो नामाशुचिः the Viv.

६ शीत Tr C'

७ ०यंति Tr H U.

८ ०यान्यग्नि० Tr, ०यान्यनि० B, ०यान्यंनि० C' U, ०याश्वंनि० H.

९ After प्रचरेत् H U C' ins. सैव तत्र प्रायश्चित्तिः ।

१० Thus Tr C' Viv. (sec. m.), नु H U B Viv. (pr. m.).

खलु चिप्रसंस्कारमाज्यं[1] ब्रुवत इति। मिन्दाहुती हुत्वा मनस्वतीं जुहोति। सैव ततः[2] प्रायश्चित्तिः[3]। ॥ ८ ॥ सप्तमः ॥

अथातो ऽग्नीनामुद्धातानां प्रायश्चित्तिराहुतयः संस्कारार्था दृष्टा भवन्ति। चतुर्होतार इत्येके। व्याहृतय इत्येके। मिन्दाहुती इत्येके। मनस्वतीत्येके। महाव्याहृतय[4] इत्येके[4]। ऽथ यदि सर्व एवोद्वायेयुरायतनेभ्यो ऽरण्योरग्नीन्समारोह्य[5] मन्थनस्याहृता गार्हपत्यं मन्थतीतः प्रथमं जज्ञे अग्निः स्वाद्योनेरधि जातवेदाः। स गायत्रिया[6] त्रिष्टुभा जगत्या देवेभ्यो हव्यं वहतु प्रजानन्निति। छन्दोभिरेवैनं स्वाद्योनेः प्रजनयतीति ब्राह्मणमथ[7] यदि मथ्यमानो न जायेत यत्रान्यं पश्येत्तत आहृत्य होतव्यमित्यथान्यमलरमाणः[8] पुनर्मन्थेदथ यदि जात एवोद्वायेत्समारोपणमन्त्रं जपित्वा पुनरेव मन्थेदथैनमुप-

[1] •सस्कारममा• U (pr. m.) Vir. (sec. m.), •संस्कारतमा• C'.

[2] ततः Tr, तत U B H C'

[3] H U C' add इति विज्ञायते।

[4] Om. Tr C'.

[5] •रोप्य B U H

[6] गायत्र्या MSS.

[7] After ब्राह्मणम् H C' insert the passage (l. 11-12): अथ यदि... पुनरेव मन्थेत्।

[8] Instead of the words: अथान्यमलरमाणः ...पुनरेव मन्थेत् (l. 11-12) H C' have (and cp. Rudradatta on Āp. IX. 2, 3): लौकिकमग्निमाहृत्य विहृत्याग्नीन्मारारणी निधाय जुहुयात्पुनरेवालरमाणो मन्थेयुर्मन्थनम्; these last two words not in C'.

तिष्ठत इषे रय्यै रमस्व सहसे द्युम्नायोर्जे ऽपत्यायेत्यथैनमुपसमिन्द्धे सारस्वतौ त्वोत्सौ समिन्धाताꣳ सम्राडसि विराडसीत्यथैनमुपसमाधायान्वाहार्यपचनमाहृत्य ज्वलन्तमाहवनीयमुद्धृत्य न्युप्योपसमाधाय[1] गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वा दशहोतारं मनसानुद्रुत्याहवनीये जुहोत्यन्वारब्धे यजमाने स्वाहेत्यथ प्रदक्षिणमावृत्य प्रत्यङ्ङाद्रुत्य[2] गार्हपत्ये दशात्मकं ब्राह्मण एकहोतेत्येतस्यानुवाकस्य दश स्रुवाहुतीरथ यद्यन्वाहार्यपचन उद्वायेद्गार्हपत्यादेनमुद्धृत्यान्वाहार्यपचने चतुर्होतारं जुहोति गार्हपत्ये दशात्मकमथ यद्याहवनीय उद्वायेद्गार्हपत्यादेनमुद्धृत्याहवनीये पञ्चहोतारं जुहोति[3] गार्हपत्ये दशात्मकमथ[3] यदि सवनगतानामग्नीनामाग्नीध्रीय[4] उद्वायेच्छालामुखीयादेनमुद्धृत्याग्नीध्रीये षड्ढोतारं जुहोति शालामुखीये दशात्मकमथ यद्यौत्तरवेदिक आहवनीय उद्वायेदाग्नीध्रीयादेनमुद्धृत्यौत्तरवेदिक आहवनीये सप्तहोतारं जुहोत्याग्नीध्रीये दशात्मकम् ॥ १० ॥

एतयैवावृतैकस्मिन्नुद्वाते द्वयोर्वा प्रतिविभज्य होतॄञ्जुहुयाद्व्याहृतीर्येद्युस्ताः समस्ताञ्जुहुयात्तथा मिन्दाहुती जुहुया-

१ These two words found in C′ H U (in U they are cancelled), U ins. अथ after ॰धाय।

२ These two words om. Tr C′ H

३ H B read हुत्वा and insert जुहुयात् after दशात्मकम्।

४ सवनगतानामग्नीनाम् om. Tr.

ऽनसन्तौ चेदाहवनीये जुहुयात्तेषामजस्राणामन्वाहितानाᳫं सवनगतानां चाग्नीनामुद्वातानां प्रायश्चित्तिरेतदेव[1] होमकाले ऽन्वाधानवर्जमेव यस्याग्निरुद्धृतो[2] ऽहुते ऽग्निहोत्र उद्वायेदिति यथासूत्रं[3] वा कुर्यादपि वा गार्हपत्यादिध्माददीय[4] मन्थनमधिमन्थनमुपसमिन्धनमित्येतान्मन्त्राञ्जिपेदपि[5] वा ज्योतिष्मतीमिष्टिं निर्वपेदपि वा ज्योतिष्मतीभ्यामृग्भ्यां पूर्णाहुतिं जुहुयादपि वा ज्योतिष्मतीᳫं स्रुवाहुतिं जुहुयादग्नये ज्योतिष्मते स्वाहेतीष्टिपूर्णाहुतिस्रुवाहुतीनां पूर्वपूर्वं विधिं बलीयाᳫंसमाचार्या ब्रुवते । तत्रोदाहरन्ति

येये विशेषा लघवो यत्रयत्रोपलक्षिताः ।
कर्म तैर्न प्रसङ्गेन कुर्यादापत्सु तद्भवम्[6] ॥
विशेषान्सर्ववेदेभ्यः[7] प्रयत्नेनोपधारयेत्[8] ।
कर्मणां प्रविचारार्थमापत्सु[9] च समाप्नुयादिति ॥

---

१ Thus C′ H B U (pr. m.) and the Viv.; °त्रिवैव Tr, °त्रिरेवाथ यदि U (sec. m.).

२ यस्यस्याग्नि° Tr.

३ Viz. according to the ritual exposed in XIII. 7 : 124. 1

४ Instead of °माददीय H U उद्धृत्य ।

५ अधिमंथनम् found in C′ Tr H U (pr. m.).

६ बहुतं H U.

७ °देवेभ्यः H Tr and once in the Viv.

८ प्रयत्नेनो° B.

९ प्रतिचारा° B U.

यदि प्रसङ्गेन हुतं च[1] लौक्ये[1] मुग्धैर्वा[2] वालैर्हुतं स्याद्विहुतं[3] च पत्न्या तानरण्योरग्नीन्[4] समारोह्योदवसाय[5] मथिलाग्नीन्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्येत्यथ यद्यप्रसङ्गेन हुतं च[6] लौक्ये[6] मुग्धैर्वा[7] वालैर्हुतं[8] स्याद्विहुतं च पत्न्या तान्याहवनीभिर्विहृत्य पूर्णाहुतिस्तन्तुमती च कार्येति । ॥ ११ ॥ अष्टमः ॥

अथ वै भवति[9] निर्ऋतिर्वा एतस्य यज्ञं गृह्णाति यस्य कस्यै च हविः क्षायति[10] यद्यवदानानि विन्दन्ति नात्र प्रायश्चित्तं कुर्वन्ति । दहति ह वा एषो ऽध्वर्युरवदानानि । ममू[11]हैतान्येव[11] तर्पयति[11] । दहति ह वा एष य[12] आज्यं[12]

---

१ ? चलोक्य Tr U, चलोके C′ the Viv. चेलोके H, चेलोके B

२ Thus B C. मुग्धैर्नवा H, मुग्धेनवा Tr U the Viv.

३ विहुते H U

४ Thus Tr and the Viv., लानारण्यो॰ H, यारण्यो॰ B U, तारण्यो॰ C′.

५ समारोह्योदवसाय H U, समारोप्य B, समारोह्य Tr C′

६ Thus Tr C′ the Viv., चैलाके B, चालोके H, लौकिके U.

७ Thus B, मुग्धैनवा H, मुग्धेनवा U C′, मुलेधनवा Tr.

८ Thus Tr B, वालैर्हुतं C′, वालैर्वाहुतं H U.

९ These three words not in H Tr

१० Thus (and cp. Āp. IX 1. 17) Tr B U the Viv. चारयति C′, चरयति H.

११ ममूर्हैतान्येव संतर्पयति U, ममूहैतान्येव तर्पयति Tr, ममूर्हैनान्येव संत॰ H, ममूर्हैनंतान्येव संत॰ B, ममूर्हैतान्येव संत॰ C′.

१२ Thus Tr and the Viv., यदाज्यं the other MSS.

पुरस्ताद्धुत्वाथावदानानि जुहोत्याज्येनोपरिष्टान्नाभिघारयति । तेषाꣳ संदग्धानां न देवास्तृप्यन्ति[1] न यजमानो । ऽथ हैनान्येष संतर्पयति य आज्यं पुरस्ताद्धुत्वाथावदानानि जुहोत्याज्येनोपरिष्टादभिघारयति । तेषाꣳ संदग्धानां तृप्यन्ति[2] देवास्तृप्यति[2] यजमानो[2] । ऽथ यद्याग्नेयात्पुरोडाशादग्नीषोमौ यजेताग्नीषोमीयादाग्निं यजेत नैतत्प्रदानमित्याश्वनीथे सुवाहुतिं जुहुयाद्यद्दो देवा अतिपादयानीति । देवपवित्रमाग्नेय्यो याज्यापुरोनुवाक्या देवपवित्रमैन्द्रियो[3] देवपवित्रं प्राजापत्या देवपवित्रं व्याहृतय इत्यथ यदि होता याज्यापुरोनुवाक्यासु सुह्वेन सर्वाभिराग्नेयीभिर्यजेतेति । विज्ञायते ऽग्निः सर्वा देवता इत्यैन्द्रीभिर्विज्ञायत[4] इन्द्रो वै सर्वा देवता इति । प्राजापत्याभिर्विज्ञायते प्रजापतिः सर्वा देवता इति । व्याहृतीभिर्विज्ञायते सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि यद्व्याहृतय इत्यथ यदि यजमानो याजमानेषु सुह्वेन व्याहृतीभिरेवान्तरेण वेद्युत्करौ प्रपद्य[5] व्याहृतीभि-

---

१ देवतास्तृ॰ U (sec. m.).

२ Thus Tr, देवा (or देवता) स्तृप्यंत्यथ यज॰ U (sec. m.) B, देवास्तृप्यति यजमानो H; C' incomplete.

३ Thus U, ॰मिंद्रियो C', ॰मैन्द्र्यो Tr U the Viv., ॰मैन्द्रिया H.

४ After the instrumental here and infra some of the MSS. ins. वा ।

५ प्रपाद्य Tr. C'.

रेवोपनिष्क्रमणं व्याहृतीभिरेवानुमन्त्रणं। विज्ञायते[1] सर्वा वा ऋचः सर्वाणि सामानि सर्वाणि यजूꣳषि यज्ञाहृतय इत्युपासते ह वै यज्ञं देवा[2] अन्तरिता[3] इदमु नो हविर्न ऊतं तद्धोष्यत[4] इत्या स्विष्टकृत इत्येक। इडाया इत्येक। आनुयाजेभ्य[5] इत्येक। आ शंयुवाकादित्येक। आ समिष्टयजुष इत्येक। ऊर्ध्वं चेत्समिष्टयजुषः स्मरेत्सꣳस्थाप्यैतामिष्टिमन्यामिष्टिमनुल्बणां तन्वीत। यज्ञो ह[6] वै[6] यज्ञस्य प्रायश्चित्तिरिति विज्ञायते। ॥ १२ ॥ नवमः ॥

अथ सांनाय्यदुहो[7] धयेयुश्चेद्वत्सा वायव्यया[8] यवाग्वा[8] सायं यजेताप्येकस्यां दुग्धायां न[9] धीतां[9] दोहयेद्दुग्धाभिः सꣳस्थाप्यादुग्धानां[10] वत्सानपाकृत्य श्वः सांनाय्येन यजेत।

---

१ ध ins. H U C'

२ देवता H C'

३ Thus H U C', अंतर्हिता Tr B

४ तस्माद्धो॰ Tr

५ Thus, not आनू॰ the MSS

६ हैव Tr.

७ सान्नायदो Tr, साय्यदुहो H.

८ Thus C' Tr and the Viv.; वायव्यया यवाग्वा B C', वायव्यया-दंवाग्वा C'.

९ ॰ नाधीतां Tr, नधीता B, नधीतां H U C' The Vivaraṇa periphrases अन्नामानीय वा दोहयीत (sic)।

१० ॰स्थाप्य दुग्धानां Tr H.

सायंदोहश्चेदार्तिमार्च्छेदिन्द्राय[1] प्रोचीं निरुप्योपवसेदिति यथासमाम्नातमपि वा प्रातर्दोहं द्वैधं कृत्वान्यतरदातञ्च[2] सायंदोहस्थाने कुर्याच्छृतस्थाने[3] इतरत्प्रातर्दोहश्चेदार्तिमार्च्छेदैन्द्रं वा माहेन्द्रं वा पुरोडाशं निरुप्य तेन दध्ना सह प्रचरेदुभयं चेदार्तिमार्च्छेदैन्द्रं[4] पञ्चशरावमोदनं निर्वपेदिति । प्रसिद्धमाग्नेयेन प्रचर्यैन्द्रेण प्रचरेत्सर्वाणि चेद्धवींष्यपि दुष्येयुर्नश्येयुरपहरेयुर्वाग्नेयैता देवताः प्रतिसंख्यायमिष्टेतामिष्टिमन्यामिष्टिमनुल्बणां[5] तन्वीत । यज्ञो ह[6] वै[6] यज्ञस्य प्रायश्चित्तिरिति विज्ञायते । ॥ १३ ॥ दशमः ॥

अथातश्छन्दस्यनाम्नातानि[7] कृतानुमन्त्रणानि व्याख्यास्यामो । वैमृधमिष्टमनुमन्त्रयत इन्द्रस्य वैमृधस्याहं देवयज्ययेन्द्रियाव्यसपत्नो वीर्यवाञ्छ्रीमान्भूयासमित्यसपत्नो वीर्यवान्भूया-

---

१ After इन्द्राय C' H U and the Vir. ins. वा महेन्द्राय वा but cp. T Br. III. 7. 1. 6.

२ °न्यतरज्ञातञ्च B U, °न्यतरदातिञ्च C'.

३ कुतस्थान इतरत् only in H U C'.

४ आर्तिमार्च्छेत् om. Tr H C'.

५ प्रतिसंख्यातमि° Tr ; C' : प्रतिसंख्याप्यामि° ; the Vir. and B U as given in the text.

६ हैव Tr.

७ The Prāyaścitta candrikā makes the interesting statement, that these anumantraṇa formulas are taken from the Kāṭhaka (कठोक्ताः sic). Some of them occur indeed in the Kāṭhaka (v. i · 44. 5 sqq.).

समिति वा[१] । पर्जन्यस्याहं देवयज्यया सुयवसो[२] भूयासम् । सोमस्याहं देवयज्यया प्र प्रजया च पशुभिश्च जनिषीय सुरेता रेतो धिषीयेति वा । सवितुरहं देवयज्यया स्वस्तिमान्पशुमान्भूयासम् । सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयम् । सरस्वतोऽहं देवयज्यया श्रद्धामना भूयासं । पूष्णोऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासं[३] । मरुतामहं देवयज्यया प्राणैस्समंध्यासं । विश्वेषां देवानामहं देवयज्यया प्राणैः सायुज्यं गमेयं । द्यावापृथिव्योरहं देवयज्ययोभयोर्लोकयोर्ऋध्यासं भूमानं प्रतिष्ठां गमेयमिति वा । वाजिनामहं देवयज्यया रेतस्वी भूयासं । वरुणस्याहं देवयज्यया धर्मभाग्भूयासं । कस्याहं देवयज्यया शविष्ठो[४] भूयासं । विश्वकर्मणोऽहं देवयज्यया विश्वानि कर्माण्यवरुन्धीयादित्या अहं देवयज्ययाऽंहसो मुच्येय । वायोरहं देवयज्यया रत्नभाग्भूयासम् । सूर्यस्याहं देवयज्यया सुदृशीको भूयासमग्नाविष्णवोरहं देवयज्यया वीर्यवान्भूयासं । विष्णोरहं देवयज्यया

---

१ H U C′ ins. पर्जन्यमिदमनुमन्त्रयते H U C′, and thus each time further on, mutatis mutandis, before each formula (e.g. after सुयवसो भूयासमिति सोममिममनुमन्त्रयते सोमस्याहं etc.). But cp. the expression (p. 312. 2.) यथादेवतमिदमनुमन्त्रयते।

२ सूयवसो Tr only.

३ पशुमान् in Tr C′ and Prāy. candrikā only.

४ शविष्ठो Tr B

शिपिविष्टो भूयासमर्यम्णो ऽहं देवयज्यया सुवर्गं[1] लोकं गमेयमिति । यथादेवतमिष्टमनुमन्त्रयत[2] एवमनादिष्टानष्टाकपालानाग्नेयविकारानाचक्षत एकादशकपालानग्नीषोमीयविकारान्द्वादशकपालान्वैश्वदेवविकारानेककपालं भूमिकपालं च द्यावापृथिव्यविकारावतो[3] ऽन्यानाग्नेयविकारांश्चरूंत्सौम्यविकारान्दधिपयश्चामिक्षापशवः[4] सांनाय्यविकारा[5] वनस्पतिः स्विष्टकृद्विकार । उपांशुयाजानुपांशुयाजविकारानाचक्षत[6] इत्यथाप्युदाहरन्ति[6] हविःसामान्यं देवतासामान्यं कपालसामान्यमिति हविर्देवताकपालसामान्ये हविःसामान्यं बलीय[7] इत्यपि[7] वास्य यज्ञस्यागुर उद्गृचमप्रीयेति सार्वत्रिकम् । १०

॥ १४ ॥ एकादशः ॥

॥ इति सप्तविंशः प्रश्नः ॥

---

१ Thus U C′ Prāy. candr., स्वर्गं Tr B H.

२ °दैवत° H U C′.

३ Thus B U H Viv., °विकारानतो Tr C′

४ Thus (°विकारान्दधि°) U C′ and Viv ; °विकारांदधि° Tr, °विकारादधि° H, °विकारानिति शाल्मीकिर B. — C′ breaks off after पयश्चामिक्षापशून् (sic).

५ Thus Tr U B, °विकारान् H.

६ Thus U ; °कारावचक्ष इत्य° H, कारानित्यथा Tr B.

७ Thus B H U and the Viv., बलीयोऽपि Tr

अथ वै भवति यः पापयक्ष्मगृहीतः स्याद्यो वापरुध्येत देवेभ्य ऋषिभ्यः पितृभ्यो गोभ्यो ब्राह्मणेभ्य[1] स्तेनाभिशस्तो ऽभिशस्यमानो वा स एतयेष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं | तस्याः प्रज्ञात उपवसथो | ऽथ प्रातर्हुते ऽग्निहोत्रे पुराणां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रꣳ शतोद्यामꣳ हिरण्मयम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मां जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ पृष्ट्याꣳ स्तीर्त्वापः प्रणीयाग्नये ऽꣳहोमुचे ऽष्टाकपाल इति दशहविषमिष्टिं निर्वपति श्रपयित्वासादयति | तस्याः सप्तदश सामिधेन्यः | समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं नमस्त इति द्वे[2] | पावकवन्तावेवाज्यभागावग्नी[3] रक्षाꣳसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य इति

---

१ B U ins. पयाम, which is neither found in the Pray. pradipa देवेभ्य. पितृभ्य ऋषिभ्यो गोभ्यो ब्राह्म॰ Tr, देवेभ्य ऋषिभ्यो ब्राह्मणेभ्यः पितृभ्य H.

२ द्वाभ्यां Tr B, द्वे H.

३ एव given by Tr only.

पुरोनुवाक्यामनूच्य यन्ते पवित्रमर्चिष्यग्ने विततमन्तरा। ब्रह्म तेन पुनीमह इति यजति[1] यो धारया पावकया परि-प्रस्यन्दते सुतः। इन्दुरश्वो न कृत्विय[1] इति पुरोनुवाक्या-मनूच्या कलशेषु धावति पवित्रे परिषिच्यते। उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्रेर्मन्ये प्रथमस्य प्रचेतस इत्ये-तस्मिन्ननुवाके याज्यापुरोनुवाक्याः षड्भंशाज्या भवन्त्यथ[2] पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्ये-तेनानुवाकेन प्रत्यृचं[1] प्रसिद्धेडाथान्वाहार्यमामाद्य हिरण्यं ददाति[1] समानं कर्म पत्नीसंयाजेभ्यो[1] ऽथ पुरस्ताद्गृह-पतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचश्[1] संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा[1] विसृजते व्रतमेतयैव यजेतत्र्यतिक्रमे[3] दारव्यतिक्रमे ऽयोनौ वा रेतः सिक्त्वैतयैव यजेत पातकोपपातकसंयुक्तो[4] दाद्ग्राह्य महा-पातकसंयुक्तो मासं पुण्यमित्यब्धसंवत्सरस्तुं वा नामैतां महा-पवित्रेष्टिरित्याचक्षते मृगारेष्टिरिति वा रुद्रेष्टिरिति[5] बौधायनः[5] [1] ॥ १ ॥ प्रथमः ॥

---

१ Thus Tr U H, कृत्व B.

२ भवन्तीत्यथ Tr

३ यजेतर्वतिक्रमे Tr

४ पातकोपपातक॰ Tr, पातकोपातक॰ B. The Vir.: पातकोपपातक-महापातकानां रहस्यकृतानाम्।

५ Tr B H repeat the last three words.

यथो एतद्यो ऽपरिमितं प्रवसतीति[1] न संवत्सरमति प्रवसतीत्येवेदमुक्तं भवति स उ चेदति प्रवसेत्पवित्रेष्ट्या यजेतेत्येतयेष्ट्या यक्ष्यमाण उपकल्पयते हिरण्यं । तस्याः प्रज्ञात उपवसथो । ऽथ प्रातर्हुते ऽग्निहोत्रे पुराग्नां प्रणयनाद्गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने येन देवाः पवित्रेणात्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु मा स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोति प्राजापत्यं पवित्रं शतोद्यामꣳ हिरण्मयम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे स्वाहेत्यपरं चतुर्गृहीतं गृहीत्वाहवनीय एव जुहोतीन्द्रः सुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या । यमो राजा प्रमृणाभिः पुनातु मां जातवेदा मोर्जयन्त्या पुनातु स्वाहेत्यथ पृष्ठ्याꣳ स्तीर्त्वापः प्रणीयाग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपति सरस्वत्यै प्रियाया उपाꣳश्वाज्यमग्नये पावकाय पुरोडाशमष्टाकपालं निर्वपति सवित्रे सत्यप्रसवायोपाꣳश्वाज्यमग्नये शुचये पुरोडाशमष्टाकपालं निर्वपति वायवे नियुत्वत उपाꣳश्वाज्यमग्नये व्रतपतये[2] पुरोडाशमष्टाकपालं निर्वपति विष्णवे शिपिविष्टायोपाꣳश्वाज्यमग्नये वैश्वानराय पुरोडाशमष्टाकपालं निर्वपति दधिक्राव्ण उपाꣳश्वा-

---

१ इति not in the MSS., but cp. III. 14 · 85. 2.

२ °तय इति Tr.

ञ्चमिति । श्रपयित्वासादयति । तस्याः सप्तदश सामिधेन्यः । समिध्यमानां च समिद्धां चान्तरेण पावकवत्यौ धाय्ये दधात्यपामिदं न्ययनं नमस्व इति द्वे[1] । पावकवन्तावेवाज्यभागावग्नी रक्षांसि सेधति शुक्रशोचिरमर्त्यः । शुचिः पावक ईड्य इति पुरोनुवाक्यामनूच्य यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीमह इति यजति । यो धारया पावकया परिप्रस्यन्दते सुतः । इन्दुरश्वो न कृत्विय इति पुरोनुवाक्यामनूच्या कलशेषु धावति पवित्रे परिषिच्यते । उक्थैर्यज्ञेषु वर्धत इति यजत्यथ हविषामग्न आयूंषि पवसे ऽग्ने पवस्वेत्यग्नेः पवमानस्योत नः प्रिया प्रियास्विमा जुषाणा युष्मदिति सरस्वत्याः प्रियायाः अग्ने पावक स नः पावकेति पावकस्या विश्वदेवमा सत्येनेति सवितुः सत्यप्रसवस्याग्निः शुचिव्रततम उदग्ने शुचयस्तवेति शुचेर्वायुरग्रेग वायो शुक्रो अयामि त इति वायोर्नियुत्वतस्त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीति व्रतपतेः प्र तत्ते अद्य किमित्ते विष्णो परिचक्ष्यं भूदिति विष्णोः शिपिविष्टस्य वैश्वानरो न ऊत्या पृष्टो दिवीति वैश्वानरस्य दधिक्राव्णो अकारिषमा दधिक्रा इति दधिक्राव्णो । अथ कृतानुमन्त्रणमग्नेः पवमानस्याहं देवयज्यया शुचिः पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमग्नेः पावकस्याग्नेः शुचेरग्नेर्व्रतपतेरग्नेर्वैश्वानरस्याहं देवयज्यया शुचिः

---

१ दाय्यौ Tr B

पूतो मेध्यो विपाप्मा ब्रह्मवर्चस्यन्नादो भूयासमित्यु पांशुयाजायामुपांशुयाजवदित्यथ[1] पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोति पवमानः सुवर्जन इत्येतेनानुवाकेन प्रत्यृचमतिथिवत्यौ[2] दमूनवत्यौ संयाज्ये जुष्टो दमूना अतिथिर्दुरोण इमं नो यज्ञमुपयाहि विद्वान्। विश्वा अग्ने अभियुजो विहत्य शत्रूयतामाभरा भोजनानि॥ मर्त्यो मृज्यते स्वे दमूनाः कविप्रशस्तो अतिथिः शिवो नः। सहस्रशृङ्गो वृषभस्तदोजा विश्वाꣳ अग्ने सहसा प्रास्यन्यानिति प्रसिद्धमिडान्ताथान्वाहार्यमासाद्य हिरण्यं ददाति समानं कर्मा पत्नीसंयाजेभ्यो ऽथ पुरस्ताद्गृहपतेः स्रुवाहुतीरुपजुहोति यद्देवा देवहेडनमित्येतेनानुवाकेन प्रत्यृचꣳ संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा विसृजते व्रतमेतयैव यजेताभिशस्तो ऽभिशस्यमानो वैतयैव यजेतर्तुव्यतिक्रमे[3] दारव्यतिक्रमे ऽयोनौ वा रेतः सिक्त्वैतयैव यजेत संवत्सरमर्धपादमेकविꣳशतिरात्र[4] वा तिर्यग्योनिगतान्ज्ञातीञ्जात्यन्तरे[5] वर्तमानान्दुष्कृतेरपहृान्दश पूर्वा-

---

१ ॰शुयाजविकारवदित्यथ H U.

२ ॰सत्यौ U.

३ Thus B U H and Prāy. candr.; Tr omits the passage.

४ Thus (अर्धपादम्)' H and Prāy. candr., ॰मूर्धपाद॰ U, मध्यपाद॰ Tr B. The meaning acc. to the Vivaraṇa is: द्वौ माषौ।

५ प्रासीन Tr and the Vir. ॰ज्ञाताम् U; B and H. om.

न्दशापरानात्मानं चैकविंशं[1] पङ्क्तिं च पुनाति न[2] च[2] पुनरावर्तत[2] इत्यथाप्युदाहरन्ति

वैश्वानरीं व्रातपतीं पवित्रेष्टिं तथैव च।
ऋतावृतौ प्रयुञ्जानः पुनाति दशपूरुषमिति[3] ॥ २ ॥

द्वितीयः ॥

अथातो नक्षत्रेष्टीर्व्याख्यास्यामो ऽग्निर्वा अकामयतान्नादो देवानाꣳ स्यामिति ता ब्राह्मणेन[4] व्याख्याताः सा या वैशाख्याः पौर्णमास्याः पुरस्तादमावास्या भवति स सकृत्संवत्सरस्यापभरणीभिः[5] संपद्यते तस्यामारभेतेति तस्या उपवसथे ऽरण्योरग्नीन्समारोह्योद्वसाय[6] मथित्वाग्नीन्विहृत्याजस्रान्वापि वा[7] पौर्णमास्याममावास्यायां वोपवसेद्यस्यां[8] तस्य

---

१ Thus B U, विंशति H Tr and Prāy. candr.

२ These words omitted by Tr as also the following इति; the Prāy. candrikā reads न च पुन॰।

३ Thus (and cp Baudh. dhś I. 2. 17, Vas. dhs. XXII. 10) Tr B (the last only ॰पुरुष॰ and U (sec m.) and Prāy. candr.; पवित्रेष्टिमताहतो। अमारेष्टिं प्रकुर्वाण पुनात्याविंशतिं (or पुनाति वि॰) कुलमिति H and U (pr. m.).

४ See T Br. III. 1. 4 sqq.

५ Thus Tr B U (sec. m.) ॰भरण्या H U (pr. m.) Prāy candr.

६ ॰रोप्यो॰ B U H Prāy. candr.

७ Om. U B.

८ उपवसेत् om. Tr.

संपद्यते । तस्यैषो ऽत्यन्तप्रदेशो । हविरुच्छिष्टमतो[1] यजमानो[2] भवतीति विज्ञायते ऽपि वा जन्मनक्षत्रे कुर्यादायुष्कामस्य[3] यावज्जीवं[3] संवत्सरार्धो वा प्रयोगो । जीववन्तावाज्यभागौ यजत्या नो अग्ने सुकेतुना[4] त्वं सोम महे भगमित्यथ[4]

९ निर्वपत्यग्नये कृत्तिकाभ्यो जुष्टं निर्वपामीत्यग्निं[5] कृत्तिका यजेति संप्रेष्यत्याग्नेयमष्टाकपालमनुमत्यै चरुमिति[6] सर्वत्रानुषजति नक्षत्रहविर्मध्ये । अपविलासादयति । तस्याः सप्तदश सामिधेन्यः । समिध्यमानो च समिद्धो चान्तरेण श्रीमत्यौ धाय्ये दधाति स्वादुषा यस्य श्रियो दृशे ऽदाभ्यः पुरएतेति ।

१० रयिमन्तौ पुष्टिमन्तावाज्यभागौ[7] यजत्यग्निना रयिमश्नवद्गयस्फानो अमीवहेत्यथ हविषामग्निर्मूर्धा भुवो ऽनु नो ऽद्यानुमतिरन्विदनुमते त्वमिति सर्वयोर्याज्यापुरोनुवाक्या ।

१ ०वतोपायो H U

२ Om. Tr.

३ Thus reads Tr; the three other MSS ०दायुष्कामस्यार्धो; the manuscript tradition, however, seems to be defective, the Vivarana runs . अपि वा जन्मनि क्रियेतायुष्काम किं तत्र स्वजन्मनक्षत्रे इत्यासिद्धं यावज्जीवमथ वा संवत्सरार्धे प्रयोग । जन्मनक्षत्रे इत्यासिद्धं जन्मनक्षत्रे विरामर्षेदायुष्कामोऽत ऊर्ध्वं यथाश्रवमायुष्कामस्य ।

४ The two mantras are given Sakalapāṭhena in B.

५ इति om. U B H.

६ इति om. Tr B H

७ पुष्टिमन्तौ om. Tr.

नक्षत्रविधानमग्निर्नः[1] पातु कृत्तिकाः[2] इति यथासमाम्नातमेव पुरस्तात्स्विष्टकृतः स्रुवाहुतीरुपजुहोत्यग्नये स्वाहा कृत्तिकाभ्यः स्वाहेति यथासमाम्नातꣳ[3] । स्विष्टकृतौ[4] संयाज्ये हव्यवाहꣳ स्विष्टमिति । संतिष्ठत एषेष्टिः सपूर्णपात्रविष्णुक्रमा । विसृजते व्रतम् । ॥ ३ ॥

एवमुत्तरमुत्तरं[5] प्रतितन्त्रमुत्तरउत्तरे[6] ऽहनि यजेत । विशेषान्व्याख्यास्यामः । प्रजापतिः सवितेत्युपांशु सर्पेभ्य आश्रेषाभ्य[7] आज्ये करम्भमिति । सर्वं यदा भवत्यधिश्रयण-काले तिरः पवित्रमाज्यमानीयाधिश्रित्य[8] तिरः पवित्रं कर-म्भानावपति[9] । पितृभ्यो मघाभ्यः पुरोडाशꣳ षट्कपालमिति । पैतृयज्ञिकेन निर्वपणप्रोक्षणाधिवपनसंवपनादीनि[10] व्याख्यातानि भवन्ति । तार्तीयसवनिकेन[11] सौम्येन प्रचरणकल्पो व्याख्यातो ।

---

१ °हविषोऽग्नि° H

२ Tr gives a longer citation of the pratika.

३ Tr. ins. अथ ।

४ °कृतौ U H.

५ एवमेवमु° U H.

६ Thus Tr, प्रतिमत्रमु° H U, संतमु° B and the Viv.

७ Thus (°श्रे°) B and Prāy. candr. as T Br. III. 1. 4. 7; °ले° U H Tr.

८ अधिश्रित्य given only by Tr.

९ Thus Tr B H and Prāy. pradipa; °मवामपति U.

१० °संवपन° om. Tr; °संपवनादीनि the Viv.

११ °सवनीयेन Tr.

ऽथैतद्वायवे निष्ट्यायै गृष्ट्यै दुग्धमिति । पयसः प्रातर्दोहवत्संस्कार[1] । श्वो[1] विशाखाभ्यामिष्ट्वा तदानीमेव पौर्णमासीमाज्येन यजेताथ श्वो भूते मित्रायानूराधेभ्यश्चरुमित्युत्तराभिरषाढाभिरिष्ट्वा[2] तदानीमेवाभिजिता यजेताथ श्वो भूते विष्णवे श्रोणायै पुरोडाशं त्रिकपालमित्युत्तरेषु प्रोष्ठपदेषु पुरोडाशं भूमिकपालमिति । कपालमात्रं[3] भूमौ परिक्षिप्याङ्गारमधिवर्तयति[4] । तस्यैककपालवत्संस्कार[5] । आपभरणीभिरिष्ट्वा[5] तदानीमेवामावास्यामाज्येन यजेताथ श्वो भूते चन्द्रमसे प्रतीदृश्यायै पुरोडाशं पञ्चदशकपालमित्यभिनीयैवाह्नि[6] निर्वपेदुदिते चन्द्रमसि प्रचरेन्नैतमहोरात्राभ्यां चरुं निरवपतां द्वयानां व्रीहीणां शुक्लानां च कृष्णानां च सवात्योर्दुग्धे श्वेतायै च कृष्णायै चेत्यभिनीयैवाह्नि[6] निर्वपेदस्तमिते प्रचरेदपि वा मध्याह्न एव निर्वपेन्मध्याह्न एव प्रचरेन्निर्वपणन्यायेन[7] प्रचरेदथैतमुषसे चरुमित्यभिनीयैव रात्रौ निर्वपेदुषसि प्रचरेदथैतस्मै नक्षत्राय चरुं निर्वपति । यथा त्वं देवानामस्येवमहं मनुष्याणां भूयासमिति निर्वपण-

१ ? Thus Tr B, ॰रोधावि॰ H, ॰रोथवि॰ U

२ ॰यानुराधे॰ Tr.

३ ॰मर्चं Tr.

४ प्रक्षि॰ U H.

५ ? Thus B; ॰रोधापभ॰ U, ॰रोपभ॰ H Tr.

६ श्विर् ins. H.

७ निर्वपणन्यायेन प्रचरेत् in Tr only.

काले यजमानायतन आसीनो यजमानो जपत्यभिनीयैवाहनि[1] निर्वपेदुदितेषु नक्षत्रेषु प्रचरेदथैतꣳ सूर्याय नक्षत्रेभ्यश्चरुमित्यभिनीयैव रात्रौ निर्वपेदुदिते सूर्ये प्रचरेदथैतमदित्यै चरुमथैतं विष्णवे चरुमिति यजति[2] । यज्ञो वै विष्णुर्यज्ञ एवान्ततः प्रतितिष्ठतीति ब्राह्मणं । वरो[3] दक्षिणा भवतीति[3] विज्ञायतेऽपाघावद्दा[4] । प्रसिद्धः पशुः । पाथिकृत्येष्ट्वा दर्शपूर्णमासाभ्यां यजेत नक्षत्रसत्त्रेण द्युतिरानन्याय । [5]ज्योतिषामयनेनेष्ट्वा पापं निर्णुद्य[6] ज्योतिष्ठमुपजायतेऽप पुनर्मृत्युं जयतीति ह[7] स्माह[7] बौधायनः । ॥ ४ ॥

तृतीयः ॥

नवैरेवामावास्यायां[8] पौर्णमास्यां[8] वा यजेत नवैर्वाभि-

---

१ हविर् ins. H.

२ Om. Tr.

३ वरा दक्षिणा भवन्तीति Tr.

४ Thus (and cp. the Journal of the German Oriental Society, Vol. LVII, p. 742) U Tr, पाद्यावद्दा B, पाकदा H. The Vivaraṇa runs : अपाघावद्दा दक्षिणा इति शेष । यथा अपाघास्तु कृयन्ते दक्षिणाः मासिषिढि पष्ठौही वराम्वद्यास्कꣳसं च शिवे चामाꣳ मस्तका इति (cp TBr. III. 12. 4. 7).

५ Tr ins ज्योतिषा ।

६ निर्णुद्य Tr.

७ Om. B.

८ Thus Tr H and the Viv., ॰मावास्यां पौर्णमासीं वा U, नवैरेव पौर्णमासीममावास्यां वा B, the accus. instead of the locat. also Āp. VI 30. 13.

होत्रं[1] जुहुयादपि वाग्निहोत्रीं वा[2] नवानादयित्वा[2] तस्याः पयसा जुहुयादपि[2] वा[2] नवानां[2] यवाग्वा[2] सायंप्रातरग्निहोत्रं जुहुयादपि वा गार्हपत्ये चतुःशरावमोदनं[3] श्रपयित्वाग्रयण-देवताभ्यः स्विष्टकृच्चतुर्थीभ्यो[4] जुहुयादपि वा नवैरेव ब्राह्मणा-न्भोजयेत्[5] एष[5] दृब्युपचारकल्पो[6] हरितयवश्यामाकधान्यौषधि-वनस्पतिमूलफलशाकानामनिष्ट्वाग्रयणं[7] यथाकामी[8] स्यात्पंक्ति-वैषम्याद्व्रीहिभिरिष्ट्वा[9] व्रीहिभिरेव[10] यजेत यवेभ्यो यवैरिष्ट्वा यवैरेव[10] यजेत व्रीहिभ्यो ऽपि वा व्रीहिभिरेव[11] यवैर्वा यजेत संतिष्ठन्त आग्रयणानि ॥ ५ ॥ चतुर्थः ॥

---

१ Thus H U and the Viv , नवैरेवा॰ B Tr

२ Thus U and the Viv., वा नवानदयि॰ Tr, वानानादयि॰ H, वैनानादयि॰ B

३ Om. Tr, cp Ap l c 15

४ Thus (as gṛhyasutra and Hir sts III. 8 23) Tr B, ॰थीभ्यो (as Āp. l. c. 16,) H U

५ Thus U and the Viv., ॰ष एवैष Tr, H B om ष।

६ Thus Tr, दृब्युपचार॰ B U, दृब्युपचारि॰ H.

७ ॰शिंबी॰ instead of ॰शमी॰ H; ॰फलमूल॰ instead of ॰मूलफल॰ U; ॰निष्ट्वापि instead of ॰निष्ट्वाग्रयणं (thus B U H and Viv ) Tr.

८ Thus B H, यथा॰ Tr U Viv.

९ Thus U and the Viv.; स्यात्पंक्तिवै॰ B, स्यात्तान्पंक्तिवै॰ H, स्याद्यतान् पङ्क्तिवै॰ Tr.

१० एव om. Tr.

११ एव om B U.

अथातः पशुप्रायश्चित्तानि व्याख्यास्यामः । स यदि पशुरुपाकृतो वाश्येत यदस्य पारे रजस इत्येताꣳ हुत्वा नैमित्तिकीं[1] द्वितीयां जुहोति यस्माद्भीषावाशिष्ठास्ततो नो अभयं कृधि । प्रजाभ्यः सर्वाभ्यो मृड नमो रुद्राय मीढुषे स्वाहेति[2] । यस्माद्भीषावेपिष्ठाः पलायिष्ठाः समज्ञास्थाः शकृदकृथा मूत्रमकृथा इत्येतेषु[3] निमित्तेषु च इदमकस्तस्मै नमस्तस्मै स्वाहेति तृतीयाꣳ । स यदि निषीदेद्यस्माद्भीषा न्यषद इत्येताꣳ हुत्वा तं मैत्रावरुणदण्डेनोत्थापयेदन्येनौदुम्बरेण वौर्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जं पशूनवरुन्द्ध इति ब्राह्मणमुदुस्र तिष्ठेत्युस्रमुदश्वेत्यश्वमुच्छागेति छागमुन्मेषेति मेषमुदग इति वशां । स उ चेत्प्राक् पर्यग्निकरणान्म्रियेत याश्वमेधे प्रायश्चित्तिस्तां कृत्वाथान्यं[4] तद्दैवत्यं[5] तद्वर्णं[6] तद्वयसं[6] तद्रूपं तज्जातीयं पशुमालभेत । तस्योपाकरणादि सर्वमावर्तते निर्मन्थ्य सामिधेनीतन्त्रेणाघारसंप्रैषसंमार्गप्रवरप्रयाजवर्जमथ[7] यदि तज्जातीयं न विन्देताजावयोर्[8] गोऽश्वा इत्यन्योन्यस्य प्रति-

---

१ •त्तिकां H U.

२ इति only in U (sec. m.)

३ Thus U (pr. m.) इत्येषु B, इत्येवमेतेषु Tr, इत्येवमेदेषु H.

४ Thus (and cp. XVIII. 11. 355. 15) Tr B; H U om अथ ।

५ तद्दै• Tr and the Viv.

६ तद्वयसं तद्रूपं H U.

७ •सामिधेनिभि• Tr, •सामिधेनीस्त• H U.

८ Thus Tr, •जावयो H U, •जावि B.

निधयो भवन्तीति[1]। तेषां छागस्य[2] मेषस्योपाकरणीयावलाभे[2]ऽन्यतममालभेत[2]। त्वाष्ट्रेण प्रचरणकल्पो व्याख्यातो[3]ऽथास्य[3] शरीरमप्सु प्रवेशयति न वा उवेतन्म्रियस आशानां त्वा विश्वा आशा इति द्वाभ्याम्। ॥ ६ ॥

अथ यद्यङ्गहीनः पशू रूपतो वर्णतो वाग्नेयीमाग्नावैष्णवीमैन्द्रीं वायव्यां प्राजापत्यामिति च कृत्वा तमेवोपाकुर्यादथ यदि वपामाह्रियमाणाꣳ श्येनो ऽपहरेत्तमभ्येदा[4] पात्र्याꣳ हिरण्यमन्तर्धाय[5] चतुर्गृहीतं[5] गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमान उद्यन्त्सुपर्णो[6] न विभाति सर्वꣳ हिरण्यकुक्षिः सप्तशिराः पुरस्तात्। सर्वेषु लोकेषु विभुः प्रविष्टो गातुमस्मिन्यज्ञे यजमानाय विन्द[7] स्वाहेत्यथैतस्यै[7] वपायै स्थाने यत्किंचिन्मेदोरूपमवशिष्टꣳ स्यात्तदुत्पाद्य[8] तेन प्रचरे-

---

१ भवंति B U H.

२ Partly conjectural reading, छागस्य मेषस्येदुपाकरणीयावुपाकरणीयाभ्यामन्यतम॰ U, छागचेदुपाकरणीया उपाकरणीयामामन्यतम॰ H, छागं च मेषं चोपाकरणीयावालाभदन्यतम॰ Tr, छागस्यमेषस्योपाकरणीयावलाभेन्यतम॰ B. The Viv. तेषां छागस्य मेषस्योपाकरणीयाविति।

३ U ins. after व्याख्या यदन्यमनभिविदर्भयति, H ins. before याख: (व्याख्यात)रेयास्य यदन्यमनभिविद्भयति (cp. IX. 19 : 296. 3)

४ Thus B Tr U; H corrupt.

५ Om. Tr.

६ उद्यन्त्सु॰ H, उद्यत्सु॰ U Tr, उद्युत्सु॰ B.

७ Thus Tr, विंदस्मा॰ B H U.

८ Thus B, ॰दुत्पाद्य Tr U H.

दंष्ट्र यद्येनां पुनर्विन्देत नैनामाद्रियेतोप यदि वपा प्रविरव-
दानं वा स्कन्देदा त्वा ददे यशसे वीर्याय चास्मास्वग्रिया
यूयं दधाथेन्द्रियं पय इत्यादाय जुहोति यत्ते द्रप्सो यस्त
उदर्षो दैव्यः केतुर्विश्वं भुवनमाविवेश। स नः पाहि रिष्टै
स्वाहेत्यथ यद्यसंस्थिते पशौ शकुनिर्वपाया उपविशेद्वपाया
प्रक्षाल्य यूपं प्रोक्ष्य तयैवाज्येन जुहोत्यापवस्व वदस्व[1] वा[1]
सोमपीतये गातुमग्निर्यज्ञे यजमानाय विन्द[2] स्वाहेति[2]
॥ ७ ॥ पञ्चमः ॥

अथातश्चातुर्मास्यान्तरालव्रतानि व्याख्यास्यामस्तत्रैतद्व्रतं[3] नानृतं वदति न मांसमश्नाति न स्त्रियमुपैति नास्य[4] पल्पूलनेन वासः पल्पूलयन्त्यन्यत्राप्यशूद्रोच्छिष्टी स्वयं पादौ प्रक्षालयते[4] न लवणमश्नाति न कौशीधान्यमन्यत्र[5] तिलेभ्यो नासन्द्यां शयीत न स्त्रियमुपेयात्काममृतौ जायामुपेयाद्यद्यजातपुत्रः स्यादुभयोः कालयोर्मधुपूर्वं व्रत-

१ ? Thus U, मदस्व H, वद्युवा B, वदस्प्रुवा Tr.

२ Thus Tr again, विंदस्वा॰ B U H, विदास्वा॰ Prāy. candr.

३ Thus B· व्याख्यास्यामोऽव्रत चरेदिति तस्यैतद्व्रतं Tr; after व्याख्यास्यामः H and U have a passage which seems to be interpolated (from XXI. 1. · 69. 2, 3): तान्यस्य (these two words only in H) यावज्जीव-प्रयोगीत्येवं चातुर्मास्यानाम(व)न्तरधिकारानि प्रथमे त्वेव संवत्सरे व्रतं चरेदिति।

४...४ om. Tr.

५ Thus (and cp. II. 20: 67. 1) B, कौशी॰ H U Prāy. candr. कौशि॰ Tr.

सुपैति। मध्वश्नातीति ब्राह्मणं[1]। हतमित्येवेदमुक्तं[1] भवति[1]। दैव्यं मध्विति। विज्ञायते ऽञ्जन्ति त्वामध्वरे देवयन्तो वनस्पते मधुना दैव्येनेति। नान्यस्योच्छिष्टं भुञ्जीत। नान्यस्यातिथ्यं कुर्वीत। नाश्नीत। नाभ्यञ्जीत। न श्राद्धं[2] भुञ्जीत। न लोमानि वापयीत[3]। न दतो धावते[4]। न नखानि निकृन्तते[4]। कामं पर्वसु[5] केशश्मश्रुलोमनखानि[6] वापयीत। चतुर्षुचतुर्षु मासेषु निवर्तयेतेति ब्राह्मणम्। संवत्सरादूर्ध्वं दार्शपौर्णमासिकमेव[7] व्रतमुपदिशन्ति तस्य चेदैवदेवस्य कालो[8] नातीयाद्यद्यतीयादग्नये[8] व्रतपतये पुरोडाशमष्टाकपालं निर्वपति[9]। सा प्रसिद्धेष्टिः संतिष्ठत आमावास्यकालादिति[10] व्याख्याताः। कालातिक्रमेष्वापदि[11] यजेत। ॥ ८ ॥ षष्ठः ॥

---

१ Thus Tr B, °वं वेदमुक्तं भवति हतमित्येतद्दै H. ° मे चैवेदमुक्तं भवति हतमित्येतद्दै U, on this passage cp Rudr. on Āp. VIII. 4. 11

२ श्राद्धानि Tr.

३ Thus U H, वापयते B, छिंदीत Tr.

४ Thus MSS, we expect the optat.

५ पर्वणि Tr

६ लोमनखानि om. Tr.

७ दार्शपूर्णमासिकं Tr

८ Thus is the reading of U sec. m. U (pr m) B and Tr. om the words यद्यतीयात् and B has कालोतीयाद् instead of कालोनाती°।

९ मरावं दक्षिणां ददाति U ms. on the margin.

१० °स्यस्य कालादिति Tr.

११ Thus also the Vivarana, कालात्ययतिक्रम° H. (rightly ?).

अथातो ऽध्वरदीक्षाप्रायश्चित्तानि व्याख्यास्यामो' दीक्षितश्चेदनृतं वदेदिदं मे वरुण तत्त्वा यामि त्वं नो अग्ने स त्वं नो अग्न इति चतस्रो वारुणीर्जपेत्' कृष्णाजिनाद्वाविच्छिन्नो दण्डाद्वा देवाञ्जनमगन्यज्ञस्ततो मा यज्ञस्याशीरवतु। वर्धतां भूतिर्दध्ना[1] घृतेन मुञ्चतु यज्ञो यज्ञपतिमंहस इति जपेद्' मेध्यमनिष्टं वा दृष्ट्वा जपतीत्युक्तमेतद्' अभिवृष्टो ऽभिवृष्यमाणो वा[2] जपतीत्युक्तमेतद्' व्रतयित्वाप आचम्य जपति शिवाः पीता भवथ यूयमापो ऽस्माकं योनावुदरे सुशेवाः। इरावतीरनमीवा अनागसः स्वस्ति नो भवथ जीवस इति' छर्दयित्वा निष्ठीव्य वा जपति यदचापि रथस्य से निरष्ठविषमसृतः[3]। अग्निष्टोमः पृथिवी पुनरात्मन्दधातु म इति' रेत स्कन्नमनुमन्त्रयते यन्मे रेतः परीतोषात्तदर्पिय[4]। अग्निहोत्रमिव[4] सोमेन तदहं पुनरादद इति' मूत्रं करिष्यन्पुरीषं वा पृथिव्या[5] जोष्टमादत्त इयं ते यज्ञिया तनूरिति' करोत्यपो मुञ्चामि न

---

१ दध्ना om. H

२ om Tr.

३ निरष्ठविषम् B U H and the Prāy. candrikā, निरष्ठीविषम् Tr and a prayoga of the collection Burnell;—असृत or असृत Tr B H and the same prayoga, असृतं B and the Prāy. candrikā.

४ परीतो° Tr B, परितो° U H Prāy candrikā—°पिय अग्नि° Tr. °पिथा । अग्नि° prayoga Burnell, °पिपेग्नि° H, °विंशाग्नि° U, °पिताग्नि° B, cp Āp. X. 13. 10

५ पृथिव्यां Tr U

प्रजामंहोमुचः स्वाहाकृताः पृथिवीमाविशतेति लोष्टं प्रतिनिदधाति पृथिव्याः संभवेति बीभत्सा नाम[1] स्थापः[1] स्वाहाकृताः पृथिवीमाविशतेत्यश्रु[2] कफस्या[3] नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्नुहानं[4] तपस्या नाम स्थापः स्वाहाकृताः पृथिवीमाविशतेति स्वेदं दुःस्वप्नं दृष्ट्वा जपत्यभिपर्यावर्तते[5] दुःस्वप्न पापस्वप्नादभूत्यै[6]। ब्रह्माहमन्तरं करवे न हि स्वप्नमुपपद्य[7] इति स्वप्ने ऽन्नं भुक्त्वा जपति यदन्नमद्यते नक्तं न तत्प्रातः क्षुधो ऽवति। सर्वं तदस्मान्मा हिंसीन्न हि तद्ददृशे दिवेति लोहितमुत्पतितं दृष्ट्वा कण्डूयं वा जपति नमो रुद्रियाभ्यो ऽद्भ्यः स्वाहेति न वर्षति धावेद्यदि धावेन्नमो रुद्राय[8] वास्तोष्पतय[9] इत्येतामृचं जपेन्नान्येन दीक्षितेन समेयाद्यदि समेयात्कया नश्चित्र आभुवदित्येतामृचं जपेद्देव-

१ Thus (and cp Āp X 14. 1) Tr, मासाप स्थ H U Viv and Prāy. candrikā, B om. this passage.

२ Thus the prayoga Burnell, ॰श्रो Tr, ॰श्रुपाते U, H totally corrupt and B defective

३ Thus Tr, Viv and prayoga Burnell, कफे निर्ते कफस्या U

४ Thus the prayoga Burnell, स्रोदं Tr, स्वेदं B and Viv, स्वप्ना H.

५ Thus MSS., read with Av VII 100 जपति पर्यावर्ते।

६ The original reading of Baudh. is difficult to restore. ॰मारुप-भुज्यते B, ॰मोभुज्यते Tr, ॰मोपभुङ्क्ते U Prāy. candr. ॰मापभुङ्क्ते H.

७ Thus B U Tr and Prāy. candr., ॰प्रद्य H.

८ Thus MSS.

९ वायते Tr.

यजनादन्यत्राभ्युदितो ऽभिनिम्रुक्तो वा सूर्यो मा देवो देवेभ्यः पात्विति जपेदितीन्वा[1] इमानि[1] सर्वाण्येवाध्वरदीक्षासु प्रायश्चित्तानि भवन्तीति[2] बौधायन[1] आवान्तरदीक्षायै विसर्गादिति शालीकिः[1] ॥ ९ ॥ सप्तमः ॥

अथातः सर्वयज्ञानां प्रायश्चित्तानि व्याख्यास्यामः[1] सर्वत्र 1
स्कन्नच्छिन्नभिन्नभग्ननष्टदुष्टविपरीतहीनेषु[3] [4]हविःस्यन्दनास्रावितपतितस्फुटितेष्वद्विजश्वानविडालकाकखरमृगपशुपक्षिसरीसृपादीनामन्यत्कीटानामृत्विजो[5] ऽग्नीनामन्तरागतानां[5] द्वादशगृहीतेन[5] स्रुचं पूरयित्वा दुर्गां[6] मनस्वतीं[6] महा-

---

१ Thus Tr (reading only •न्वा), जपेदितीमानि B U H.

२ ब स्मादे ins H U

३ Thus the Prāyaścittapradīpa, and H and the Viv., the last two omitting, however, •भिन्न•; स्कन्नच्छिन्नभिन्न भग्न• B U, स्कन्नभिन्नच्छिन्नभग्न• Tr; •हीन B.

४ हविस्यदना• B, हविस्यंदना• H, हविस्यन्दना• Tr, हविर्विस्यदन• U.

५ One of the most difficult passages! स्फुलितेष्वविद्विज• U, स्फुटितेषुद्विज B U, •स्फुटिताद्विज• Tr. The Viv reads •द्विज• (द्विजातिरिक्ताः शूद्रादयः) – श्वानवि (or वि)डाल• all, but the Viv. •श्वामोविडाल• explaining श्वा शुकडम्; this points to •द्विजश्वामोविडाल• – Before खर B U have शुक• – •सरीसृपादिर् H U and the Viv., सरीसृपादि• Tr, सरीसृपादीनाम् B. – अन्यत्कीटानाम् the Viv., अन्यत्कीटे• B, अन्यत्कीटानाम् H, U. – ग्नीनामंतरागतानांद्वा• U (sec. m.), ग्नीमन्तरागतानांद्वा• H U (pr. m.) ग्नीनामंतरागमद्वा• B Tr, ग्नीनामंतरागवद्वा• Viv.—Read perhaps instead of अग्नीनामन्तरागतानाम्: अन्तरागमने। In the Gṛhyasūtra (IV. 8) this passage also is to be found equally corrupt.

६ Thus Tr, दुर्गामनस्वतीं B U H

व्याहृतीस्तिस्रो जुहुयाज्जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः। स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः स्वाहेति[1]। कार्यविपर्यासे च[2] मन्त्रब्राह्मणमात्रं[3] दर्भश्वावर्हिःपरिधिविधृतिपवित्रहविःकपालस्रुक्स्रुवारणिकृष्णाजिनप्रणीताम्युदासनेन[4] यत्किंचित्कार्यविपर्यासः स्याद्ये चान्ये चाज्यस्थाल्याः स्रुवेणोपघातं प्रायश्चित्तानि जुहोति प्रजापतये स्वाहा हिरण्यगर्भाय स्वाहेत्यथ पितामहां जुहोति भृगूणां पतये स्वाहाङ्गिरसां तपसे स्वाहेत्यथ महाव्याहृतीर्जुहोति भूरग्नये च पृथिव्यै च महते च स्वाहा भुवो वायवे चान्तरिक्षाय च महते च स्वाहा सुवरादित्याय च दिवे च महते च स्वाहा भूर्भुवः सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहेत्यथ व्याहृतीर्जुहोति भूः स्वाहा भुवः स्वाहा सुवः स्वाहा भूर्भुवः सुवः स्वाहेति ॥ १० ॥

॥ **अष्टमः** ॥

११ मन्त्रहीने ऽतिरिक्ते वा दुरधीते दुरागते।
अनागते ऽवषट्कारे[5] ऽतीते[6] वापि[7] यद्भुते[8] ॥

---

१ दुर्गा ins B.

२ च found in H Tr and the Vivaraṇa.

३ Thus B, °मात्र Tr, °मचमेदे च U, °मात्रीमेदे च H.

४ This whole passage is incomprehensible to me, च्चिः om. B K. – °कपालनामयु° H U – °भरणी° B K U – प्रणीतानामग्न्युदासनादि H U

५ °टूकवे H.

६ Thus Tr, ऽतीते H U, यतीते B.

७ चापि Tr, B

८ ? °ते B Tr, °र्त H U.

हविषः[१] स्कन्दनादग्नेर्होतुर्हीनस्वरेण[२] च।
अतिदाहे च हविषां यत्किंचित्पात्रभेदने॥
कपालनाशे भेदे च चतुष्पाद्यन्तरागते[३]।
प्रणाशे च पवित्रस्य[४] श्राज्यस्यैवावलोडने[५]॥
हविषां च विपर्यासे ऋत्विक्प्रयतेषु च।
यज्ञप्रसारणीकाले[६] द्वैधीभावे समुत्थिते॥
मिन्दाहुती च होतव्ये व्याहृतयः प्रणवादिकाः।
वारुण्यस्तन्तुमत्यश्चाग्निश्च[६] मनस्वती॥
महाव्याहृतयः सप्त प्राजापत्या तथैव च।
प्रसंधानाय यज्ञस्य[७] लेते[७] मन्त्राः प्रकीर्तिताः॥
अप्रायश्चित्तिको यज्ञो ह्यसुरैः संप्रयुज्यते।
असुरैर्भुक्तयज्ञस्य[८] देवान्दोषेण[९] सङ्ग्रयेत्॥

---

१ Thus Tr and the Viv. हविषाऽ U, हविषां B, हवि H.

२ होत्र॰ Viv.

३ *Thus Tr B and the Viv*, ॰प्यादन्तरागतौ *U*, ॰प्यादन्तरागतौ *H*.

४ Thus U, ॰चस्याज्य॰ Tr H, ॰चस्यचाज्य B.

५ ? Thus U H, प्रसारणा॰ Tr, प्रासारणा॰ B, प्रसारणिकाले यज्ञप्रसारिणि (sic) यज्ञविस्तार the Vivarana.

६ Thus Tr H T U, ॰मत्यश्चायाग्न॰ B

७ Thus Tr, यज्ञस्यैवे U (pr. m.) and H, स्येवैते U (sec. m.) स्यतत्ते B.

८ Thus H U B, ॰यज्ञस्य Tr.

९ Thus Tr B, यज्ञेन U, इयज्ञन H.

ऋत्विजो यजमानं[1] च[2] आयुषो[2] ब्रह्मवर्चसात्[3]।
प्रच्यावयेद्दुरिष्टं तत्तस्माद्दोषात्प्रणाशयेदिति[4] ॥

॥ ११ ॥ नवमः ॥

अथातो ऽनुपस्थाव्याख्यास्यामः[5] । सायꣳहोमं चोपोदयं[6] जुहुयात्प्रातर्होमं चोपास्तमयं[6] कालेन कालमनतिक्रम्य । कालो[7] दर्शपूर्णमासयोरग्निहोत्रस्य च न[8] स्कन्दते[8] न व्यथत इति[9] विज्ञायत । आ प्रातराहुतिकालात्सायमाहुतिकालो नातीयादा सायमाहुतिकालात्प्रातराहुतिकालो । ऽथ यदि सायꣳ सायं दोषा वस्तोर्नमः[10] स्वाहेत्यहुतिꣳ हुत्वाग्निहोत्रं जुहुयाद्यदि प्रातः प्रातर्दोषा वस्तोर्नमः[10] स्वाहेत्याहुतिꣳ हुत्वाग्निहोत्रं जुहुयादथ यदि पूर्वस्यामाहुत्याꣳ हुताया-

१ Thus B K U (pr m.), ॰मानस्य Tr, मानं वा U (sec m)

२ ह्यायुषो Tr.

३ ॰वर्चसः Tr.

४ Thus H U, ततस्मा॰ B, तुतस्मा॰ Tr—The last words repeated in B Tr.

५ Thus Tr B and the Viv, नुकल्पाख्या॰ H U

६ Thus U H, वो॰ B Tr and the Viv.

७ Thus H; काले U, कालेन B कालेन च Tr

८ Thus H U, नस्कंदते B, स्कन्ने Tr; ॰होत्रस्य च स्कदनं व्यथते Viv., cp. the citation of Bhāradvāja in Rudradatta's comm. on Āp IX. 7. 3

९ च ins, H U.

१० वस्तर्दोषा U and Prāy candrikā.

माहवनीयो ऽनुगच्छेदग्निर्दारौ दारावग्निरिति वदन्नकाले[1] हिरण्यं निधायोत्तरामाहुतिं जुहुयात्कालातिक्रमेष्वापद्धोमः । आमावास्यस्य[2] कालात्पौर्णमासस्य कालो नातीयादा पौर्णमासादामावास्यस्या मौह्याग्रयणस्य कालाच्छ्यामाकाग्रयणस्य कालो नातीयादा यवाग्रयणस्य कालाद्व्रीह्याग्रयणस्या[3] श्यामाकाग्रयणाद्यवाग्रयणस्या[4] वरुणप्रघासानां कालाद्वैश्वदेवस्य कालो नातीयादा साकमेधेभ्यो[5] वरुणप्रघासानामा शुनासी-र्यात्साकमेधानामा वैश्वदेवाच्छुनासीर्यस्या दक्षिणायनपशोः कालादुत्तरायणपशोः कालो नातीयादोत्तरायणपशोर्दक्षिणा-यनपशोरोत्तरवसन्तज्योतिष्टोमस्य[6] कालात्पूर्ववसन्तज्योतिष्टो-मस्य[7] कालो नातीयात्सर्वमस्य संवत्सरस्या[8] निक्ष्यासुत्या[8] । ऋषयो ह स्म तत्प्रयोयुगा[9] आसन्नुस्ते ऽर्धमासायार्धमासायाग्नि-होत्रमजुहवुः[10] । प्रतिपदि सायं चतुर्दशगृहीतानि गृह्णाति ।

---

१ Thus U, वदन्न° Tr, वदेव° B H.

२ Thus Tr, °होमसामा° U, होमामा° B U.

३ Thus Tr, °यणाद्व्रीह्याग° B H, °यणकालाद्व्रीह्याग° U.

४ श्यामोकाग्रव° Tr.

५ Thus U, °धानां H B, °धानां कालाद° Tr.

६ Thus Tr, °पशोरुत्तरवसंत° B U.

७ Thus Tr, °पूर्ववसंतस्यज्यो° B, °पूर्ववसंतज्यो° U.

८ ? Thus Tr U, °त्सरस्य चानी° B; H om. this passage.

९ तत्प्रयोयुगा Tr, प्रयोगा H and the Viv. (pr. m.) तत्प्रयोगा B, प्रयोग U. प्रयोयुगा Viv. (sec. m.) which explains अतिप्रयोग प्रयोगविदः ।

१० Thus Tr B, र्धमासेर्धमासेऽग्नि° H U — °मजुहवुः Tr, °मजुहुयु U H, °मजुहुवु° B; on this passage cp. Hir. pi. sū. II. 9 · 56, 11.

मरुद्वयते हविरेका[1] मभिसंक्रुद्वोमः[2] मरुद्वयस्थानृ । मरुत्पाणिनिमार्जनमेतं प्रातरंथ पव्साधानऋते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ठाग्रयणेश्चातुर्मास्यैः पशुबन्धेन चाग्नये पथिकृते ऽग्नये तन्तुमते ऽग्नये वैश्वानरायाग्नये व्रतपतय इति[3] पुरोडाशान्निरुप्याग्निहोत्रवृ कृत्वा[4] दर्शपूर्णमासाभ्यामिष्ठाग्रयणेश्चातुर्मास्यैः[5] पशुबन्धेन चापि संवत्सरमऋते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ठाग्रयणेश्चातुर्मास्यैः पशुबन्धेन चाग्नये पवमानायाग्नये पावकायाग्नये शुचये ऽग्नये पथिकृते ऽग्नये तन्तुमते ऽग्नये वैश्वानरायाग्नये व्रतपतय इति पुरोडाशान्निरुप्याग्निहोत्रवृ कृत्वा[6] दर्शपूर्णमासाभ्यामिष्ठाग्रयणेश्चातुर्मास्यैः पशुबन्धेन च । ॥ १७ ॥

अथ हविषामर्थं व्रीहियवौ । तयोरलाभे[5] प्रियङ्गवः कोद्रवोदारवरकवर्जंृ[6] श्यामाकनीवारवेणुयवास्तरमंपाककन्दमूलफलान्यापः[7] मक्तुमिति[8] । हतमाज्यार्थं । गव्यमिति प्रत्यय-

[1] Thus Tr B. रकाृ मभिषृम॰ U H

[2] B U H put व्रतपतये before वैश्वानराय ।

[3] Tr ins अग्निहोत्रं जुहुयात् ।

[4] ॰मांस्यैः Tr.

[5] Thus B Tr, the Vy. and the Prāy. candr.; ॰लाभे H U.

[6] Thus Tr H U, ॰कोद्रव॰ B; ॰दारवरकनाववर्जं the Prāy dīpikā.

[7] Uncertain reading; ॰संपाककंदमू॰ Tr, ॰संपाकंदमू॰ B U, ॰संपाकंमू॰ H, ॰मकंदमू॰ Prāy. pradīpa.

[8] Thus H U, मक्तमिति B ॰मक्तुमिति Tr.

स्तेषामलाभे माहिषमाज्यं वा हतमाज्यार्थे प्रयुञ्जीत[1] भोजनेष्वविरुद्धं मन्यन्त[2] एके तयोरलाभे तैलं प्रतिनिधिस्तस्यालाभे ऽर्तिलतैलमतसीकुसुम्भसर्षपवार्क्षवैद्या[3] इति[2] शिष्टप्रामाण्यादन्न ऊर्ध्वमलाभे यवपिष्टानि व्रीहिपिष्टानि श्यामाकपिष्टानि वाद्भिः संसृज्याज्यार्थे प्रयुञ्जीत कुशा स्तरणार्थे[4] तेषामलाभे शरमयकुतपाश्ववालमुञ्जसुगन्धितेजनार्जुनादारदूर्वाश्मामाकाः[5] वीरणा इत्येत इत्येतेभ्यः प्रस्तरबर्हिर्विधृतिपवित्रयूपरशनाशाखाकपरिस्तरणान्तर्धानासनशयनस्तोत्रोपाकरणार्थाः कार्याः सर्वतृणेभ्यो वा शुष्कशुण्डिनलवल्वजकणमूलतृणवर्जं[6] पालाशः खादिरो वेध्मस्तयोरलाभे याज्ञिकानां वा[7] वृक्षाणामन्यतमस्तेषामलाभे ऽरत्नकपित्थकोविदारश्लेष्मातकनीपनिम्बतिलकबाधकबिभीतकराजवृ-

---

१ Thus B U, प्रयुंजते Tr., H omits the passage.

२ B U ins. इति।

३ Emended; ०वार्चवैद्यविशिष्ट० Tr, ०वार्चावावैद्याच्छ्य० B, वार्चवावैद्या इति शिष्ट० H U.

४ ०स्तरणा० H U.

५ शरमय० Tr, शरमय्य० U, शरमय्य H U -- ०र्जुनादार० Tr, ०र्जुनादारा० B U, र्जुनशरा H.

६ Thus Tr (reading only शुष्कं instead of शुष्कि); शुक० H U, ०मौर्वबिल्वकुश० B; ०शुण्डिनवल्वजकण० H, ०शुण्डिनवल्वल० U. Sāyaṇa (citing in his bhāṣya on the darśapūrṇamāsa) gives शुष्क instead of शुष्कि०।

७ Om. by Sāyaṇa in his citation

चकरञ्जपलाण्डुवर्जं[१] । सर्ववनस्पतीनामित्यो भवतीत्येके[२] । दक्षिणानां काले गौर्हिरण्यं वासस्तेषामलाभे फलानां मूलानां भक्ष्याणां[३] दद्यान्न त्वेव न यजेत ।

नित्यं[४] नित्येषु युक्तः स्यात्तथैवाजस्रिकेषु च ।
यस्य नित्यानि लुप्तानि[५] तथैवाजस्रिकाणि च ॥
विपर्यस्तो[६] न स[७] स्वर्गं गच्छते पतितो हि सः ।
तस्मान्मूलैः फलैर्वापि[८] मधुना तरसेन[९] वा[९] ।
नित्यं नित्यानि कुर्वीत न च नित्यानि लोपयेत् ॥
न च नित्यानि लोपयेदिति ॥ १३ ॥ दशमः ॥

## ॥ इत्यष्टाविंशः प्रश्नः ॥

१ Thus Tr and B (B reading however, मन्मलो॰ and ॰पर्णार्जुन instead of ॰पलाण्डु॰ both have ॰वाभ्रीपम॰ instead of ॰वाभक॰) Sāy in a citation agrees with the above given reading, putting only करञ्ज between कपित्थ and कोविदार, U reads नीपनिंबतिलकबाभक विभीतकराजवृक्षशाल्मलिरक्तां (see in करञ्ज करजपित्थकोविदारश्लेष्मातक-पलांडु (see in पर्णार्जुन वर्जं. H नीपनिवविल्वाकवाभ्रीपकवैभीतकराजवृच-शालमर्कटकपित्थकरञ्जककोविदारश्लेष्मातकपलाडुवर्ज।

२ After एके the MSS exc. Tr and the Viv. ins यदि।

३ Thus H U, भक्ष्याणां B, भक्षणानां Tr

४ Thus B U and Viv , नित्या Tr. नित्यं H

५ युक्तानि Tr

६ Thus Tr B and Viv., विपर्यस्ता U H

७ सः U च Tr.

८ Thus U H and Viv., मूलफलैः Tr B

९ Thus B and Viv. तरसापिवा Tr U H.

अथाभिदग्धानि[१] सदोहविर्धानानि समस्तदेवयजनमाहु-
तेव[२] क्रियेरन्ननाहृता[३] वा[४] वसतीवरीः प्रथमं गृह्णीयादिति[५]
वाधूलकस्य मतमंयेतरानानुपूर्वमित्यथ[६] यदि [७]भिन्नेषु कपा-
लेषु सर्वाणि[८] निपतेयुस्तत्र यावन्मूतं[९] पुरीषमादाय वसती-
वरीभिः संयुत्य[१०] विसाद्य प्रचरेत्तत्र प्रायश्चित्तं यद्वाणामेकेन १
जुहुयादाग्नीध्रीयविनाश आग्नेय्यर्चा[११] जुहुयादग्निर्मूर्धा दिव
इति। वैष्णव्या हविर्धाने[१२] विष्णो त्वं नो अन्तम इत्याग्नेय्या[१३]
सुच्चयमग्निः सहस्रिण इति। वायव्यया वायव्येषु वायो शतं
हरीणामित्यैन्द्रिया[१४] सदसीन्द्रं विश्वा अवीवृधन्निति। वैश्व-

---

१ अथाति० H U and the Vivaraṇa.

२ Thus Tr H U and Pray. candrikā, समस्तदेव० B.

३ Thus B and the Viv., क्रियेरन्नाहृता Tr H U, cp. Rudradatta on Āp. XIV. 25. 2.

४ Om. T B, given by U H and the Vivaraṇa.

५ Thus Tr B, गृह्णीरन्निति H U.

६ Thus B, ०तरानानुपूर्वमित्यथ Tr, ०तरानानुपूर्व्यं भवत्यथ U, ०तरान्यनुपूर्वं भवत्यथ H.

७ Om. H.

८ कपालानि यत्र ins. B, यत्र ins. Tr

९ यावन्मूतं U and Viv., यावन्मृतं B H, यावन्मूतं Tr.

१० Thus U, ०युत्य H B, ०सृज्य Tr.

११ ०ग्नेय्या B U H.

१२ ०र्धाने B Tr.

१३ The passage आग्नेय्या...हरीणामिति found in H U only.

१४ ०त्यैन्द्र्या H B ०त्यैन्द्रा Tr, त्यैन्द्रा U.

देव्या प्राग्वꣳशे विश्वे देवाः शृणुतेमꣳ हवं म इति । सर्वेषु मिन्द्राहुती जुहुयाद्व्याहृतीश्चापि वेष्टिं निर्वपेदगारदहने[१] क्षामवान्[२] सर्वविनाशे तन्तुमती[३] । दग्धेषु[४] सोमेषु वा नष्टेषु वा सोमानामुपघातापहारेषु[५] वा यथालाभमꣳशूनाहृत्य वसतीवरीभिः[६] संयुत्याभिषुत्य[६] प्रचरेत्सर्वविनाश ओषधीभिरभिषुत्य प्रचरेत्तत्कृत्वा[७] पुनर्यजेतेति श्रुतिरेवमेव कुर्यात्सा[८] प्रायश्चित्तिरिति । ॥ १ ॥ **प्रथमः** ॥

अथ होत्रकाणामन्योऽन्यस्य मैत्रावरुणश्चोदयेदपि[९] वान्योऽन्यस्य याज्यापुरोऽनुवाक्याभ्यां[१०] यजेत[१०] तस्य प्रायश्चित्तं । ब्राह्मण एकहोतेत्यस्यानुवाकस्य प्रथमेन होतुर्जुहुयाद्द्वितीयेन मैत्रावरुणस्य तृतीयेन ब्राह्मणाच्छꣳसिनश्चतुर्थेन पोतुः पञ्चमेन नेष्टुः षष्ठेनाच्छावाकस्य सप्तमेनाग्नीध्रस्याध्वर्युः प्रधानदेवतामनुच्चारयित्वा योऽन्यामुच्चारयेद्यद्वो देवा अतिपादयानीत्येतया स्रुवाहुतिं जुहुयाद्दशात्मकेनाष्टमेन नवमेन पूर्वोक्तं

१ Thus Tr U Viv °दाहे B H

२ Thus all the MSS and the Vivarana.

३ Thus Tr and the Viv, मती B H U

४ दहनेषु Tr

५ Thus Tr B, वोपघातापहारेषु U, वेषघातापहारेषु H

६ °वरीभिरवकृष्य U, °वरी सूष्य H, Tr B om. these three words.

७ तत् om. H U

८ सा om. U Tr

९ Thus Tr °चोदयत्यपि वा B U H and the Viv.; H om. अपि वा ।

१० Thus Tr B and the Viv, °वाक्याभ्यामभयजि H, °वाक्या भयजि U.

प्रायश्चित्तं कुर्यादुक्थ्यपर्यायेषु[1] यथाक्रमेण जुहुयाद्दशमेन षोडशिराक्षिपर्यायेभ्यो[2] राथंतराय संधये। तथा शिपिविष्टस्तोत्रे वाजपेये। तथातिरिक्तस्तोत्रेष्विति[3] यथाचोदितमन्यो यजेत्तत्प्रथमो[4] यजेज्जपेद्वा स्वयं चोदितः स्वयमेव यजेद्द्वितीय एव[5] प्रायश्चित्तं भवेत्सोमे ऽन्यत्रैवं कुर्याद्धोताप्येन यजेदन्येनैव[6] मैत्रावरुणो वा पूर्वोक्तं प्रायश्चित्तं कुर्यात्तथा याज्यापुरोऽनुवाक्यास्वन्यथान्यत्प्रायश्चित्तं[7] भवेदथाश्वमेधस्यात्र होमेष्वारण्यानां पशूनाꣳ स्रुवाहुत्या ऊनातिरिक्तपुनरुक्तव्याघातेषु[8] मिन्दाहुती जुहुयात्तथेष्टकोपधाने। ऽप्य[9] देवसुवाꣳ हविषामन्यद्धोममन्यदैवतस्य[10] कुर्यात्तदुत्सृज्य पुनरुत्पाद्य यजेदतिशिष्टꣳ सह यजेज्जपेद्वा। पूर्वोक्तं प्रायश्चित्तं कुर्यादिति। ॥ २ ॥ द्वितीयः ॥

---

१ ॰क्थ॰ H U

२ Thus B H, षोडशिनिराक्षि॰ Tr U.

३ इति in Tr only.

४ Thus Tr U, यजेतत्प्र॰ B, यजेतप्र॰ H.

५ एवं B only.

६ Thus B U, यजेतान्ये देवत Tr (H om.).

७ ? Thus Tr, ॰क्यास्वन्यथान्यतप्रा॰ B, ॰क्यास्वथान्यथान्यत्र प्रा॰ H, ॰क्यास्वथान्यत्र प्रा॰ U.

८ ? Thus Tr, ऊनातिरिक्तेषु पुनरुक्तव्याघातेषु U, ऊनातिरिक्तेषु H, न्यूनातिरिक्तेषु B

९ अ om. H U.

१० ? ॰ममन्यद्धोममन्यदैव॰ B, ॰षामन्यं होममन्यदैव॰ Tr H, ॰षामन्य॰ दन्यदै॰ U.

अथ वितते यज्ञकर्मणि प्रायश्चित्तानि व्याख्यास्यामस्त-त्रौषधं पयः पशुः सोम आज्यमित्येतेषु न्यूनेषु वा नष्टेषु वापहृतेषु[1] वा[1] पुनरुत्पाद्य यच्छोयार्थंच भारेभ्यात् स्विष्टकृत उत्पादनं भवति । स्विष्टकृत ऊर्ध्वं स्मरेत्तत्संस्थाप्यैतेनैव[2] पुनर्यजेत्सह यजेद्वाथ यदि निरुप्य स्मरेदन्यं[3] दैवतमसुष्मै त्वेति प्रतिविभज्याभिमृश्य[4] सर्वं जुहुयादसुष्मै स्वाहेति । यत्र[5] स्मरेत्तत्रैवमेव कुर्यादासादनादर्थ[6] यथासाद्य स्मरेद्न्यायात्य स्थानेषु जुहुयादन्यदा[7] पूर्वोक्तं प्रायश्चित्तं कुर्यादन्यास्तु देवता-स्विष्टास्[8] नष्टेषु दुष्टेषु वा[8] दोषवति[9] तन्त्रे प्रधानमावर्तये-त्सर्वेष्टिरग्रेपतंस्तस्य[10] कः कर्मण उपक्रमो भवतीति । भागिनो दैवतस्य शूर्पादानप्रभृति कर्म कृत्वा अपयित्वामाद्य स्वस्थाने[11]

---

१ These two words in Tr only

२ तत् om. B H

३ ॰न्यदेवतं H

४ तदानीमेव ins. U.

५ वा ins. B U H

६ जुहुयात् instead of कुर्यात् Tr

७ अन्यत् in U only. Is it to be cancelled ?

८ Thus B U, ॰ष्टासुनेषुदुष्टेषु वा H, ॰ष्टुंनष्टेषु वा Tr

९ Thus B U, दोषवति Tr, – षवति B.

१० H आवर्तयेत् instead of आवर्तयेत्, ॰सर्वेष्टिरग्रेपेतस्य Tr, ॰सर्वेष्विष्टिर-ग्रेषतस्तस्य B U, ॰सर्वेष्टिरग्रेतस्य H ; सर्वेष्टिरग्रेता gives the Vivarana.

११ स्व om Tr.

प्रचरेत्तत्र प्रायश्चित्तं मिन्दाहुती जुहुयाद्व्याहृतीश्चैव[1] पशावुपाकरणप्रभृत्या[2] स्विष्टकृतः[2] पूर्वोक्तं[3] प्रायश्चित्तं[3] कुर्यादथ[3] यदि प्रातरनुवाकमनुपाकृतमादित्यो ऽभ्युदियात्कथं तत्र प्रायश्चित्तं भवतीत्युषाः केतुना जुषतां यज्ञं देवेभिरन्वितम् । देवेभ्यो मधुमत्तमꣳ स्वाहेति मिन्दाहुती व्याहृतीश्च हुत्वोपाकुर्यादथ यदि प्रातरनुवाके प्रस्तूयमान आदित्यो ऽभ्युदियादुदयं तमस्परि उद् त्यं चित्रमित्येताभिः स्रुवाहुतीर्जुहुयादथ यदि सोमो नाविः स्यान्नवोनवो भवति जायमानो यमादित्या अꣳशुमाप्याययन्तीत्येताभ्याꣳ[4] स्रुवाहुती[4] जुहुयाद्यदि[4] सूर्याचन्द्रमसोर्ग्रहणं[5] विद्यत एतदेव[6] ॥ ३ ॥

अथ यदि यज्ञान्गृह्यमाणो भागिनीं देवतामगृहीत्वा योन्यां गृह्णीयात्तथामुष्मै[1] स्वाहेति तदानीमेव सर्वं जुहुयाद्भागिनीं पुनर्गृहीत्वा मिन्दाहुती जुहुयादपि वा यज्ञाणामेकेन जुहुयात्सर्वांश्चावमृते विधे नामन्नित्येवमादीन्यज्ञाश्चोत्तमाणां[7] ग्रहेषु वा चमसेषु वा हविर्दोषोऽकदोषो[8] भवे-

1. °द H U.
2. Thus Tr, °प्रभृतिनत्याश्विष्ट° H U B.
3. Thus Tr, पूर्वोक्तं प्रायश्चित्तमथ B, °हुतमथ H U.
4. एताभ्यां सुवाहुतीर (sic) and यदि only in Tr.
5. सूर्यचन्द्र° B U H.
6. °यादेवा° H U.
7. Thus Tr, °षोडशा or षोडशां B U H.
8. Before भवेत् H U ins वा ।

न्थापो[1] ऽभ्यवहृत्य[1] तत्प्रायश्चित्तं कृत्वा तथा पुनर्गृहीत्वा जुहुयाच्चमसेषु[2] पुनरुन्नीय जुहुयाद्धुत्वा वा तस्मिन्हिरण्यमन्तर्धायाप आनीय भक्षयेत्सैव ततः प्रायश्चित्तिरथ यदि सवनकालो ऽतिक्रामेदग्निर्मूर्धा दिव इत्येतस्यानुवाकस्य प्रथमेन गायत्रेण[3] जुहुयात्प्रातःसवने[4] तथा त्रैष्टुभेन[5] माध्यंदिने सवने तथा जागतेन[5] तृतीयसवने ऽत ऊर्ध्वमतिरात्र[6] उत्तरमहर्नाधिगच्छेद्यदि गच्छेदन्यमेव आगच्छेत्तच्च प्रायश्चित्तं सर्वान्होतॄन्जुहुयाद्विज्ञायते ब्रह्म वै चतुर्होतार इति तस्माच्चतुर्होतृभिरेव जुहुयादत ऊर्ध्वमहःसंख्यां[7] नाधिगच्छेदेकाहेष्वथ[8] सवनीयानां प्रायश्चित्तिरथ यदि पूतिगन्धः[9] स्यात्तदुत्सृज्य पुनरुत्पाद्य प्रचरेदपि वोष्णोदकेन प्रक्षाल्याज्ये[10] ऽवधाय[10] पुनः श्रपयित्वा प्रचरेत्तत्रापि यदि[11] पूतिगन्धो भवेत्तदुत्सृज्य पुनरेवोत्पाद्य प्रचरेत्तथा सवनीयानां पुरो-

---

१ °न्थापहृत्य Tr.

२ Thus Tr, चमसेषुवा B H U.

३ गायत्र्या Tr.

४ प्रातः सवने जुहुयात् B H U.

५ त्रिष्टुभा, जगत्या Tr.

६ °तिरात्रादुत्तर° Tr

७ Thus H and Viv. ; सख्या B U, सङ्ख्यं Tr.

८ यदि ins Tr.

९ Thus B and Viv , पूतीगध U, पूतीगधः H, पूतीगध Tr.

१० Thus U, °श्येनावधाय H, °ज्येन—B, °ज्येन, *omitting* ऽवधाय, Tr.

११ in U only.

ब्राह्मणानां' तथा सांनाय्यानामथ यदि स्तोत्रꣳ शस्त्रं प्रतिगरं वोत्सृजेदिन्द्राहुती हुत्वोपाकुर्यादथ यद्येकाꣳ स्तोत्रीयाꣳ सूक्तं वर्चं वार्धर्चं वा प्रतिगरं वोत्सृजेदिन्द्राहुती हुत्वा जपेत्स्तोत्रोपाकरणप्रभृत्या[1] होमाद्वाचं यच्छेद्यदि वाचं विसृजेद्वैष्णवीमृचं जपेदथ यद्याय्राय वाचं विसृजेद्वैष्णवीमृचं जपेद्विष्णो त्वं नो अन्तम इति' पुनरेवाग्राय[2] यद्येदूनातिरिक्तपुनरुक्तव्याघातेष्वन्येषु वान्येत्र प्रायश्चित्तं[3] मिन्द्राहुती जुहुयात्सर्वेस्थानेषु मिन्द्राहुती यज्ञशरीरमिति श्रुतिस्तस्मात्सर्वेषामाचार्याणां प्रशस्तमिति' ॥ ४ ॥ तृतीयः ॥

अथ यदि हुताहुतौ सोमौ सꣳसृज्येयातामाहवनीयादुदीचो[4] ऽङ्गारान्निरूह्य[5] तेषु जुहुयाद्यज्ञस्य त्रि स्व स्वलियाविन्द्राग्नी चेतनस्य च । हुताहुतस्य द्रप्सतमहुतस्य हुतस्य च ॥ हुतस्य चाहुतस्य चाहुतस्य हुतस्य च । इन्द्राग्नी अस्य सोमस्य वीतं पिबतं जुषेथाꣳ स्वाहेति' तस्य नित्यभक्षमनुवर्तयति[6] मा[6] यजमानं तमो विदन्मर्त्विजो मो इमाः प्रजाः । मा यः सोममिमं पिबात्सꣳसृष्टमुभयं हुतमित्यथ यदन्य-

१ Thus Tr B, ०स्तोत्राद्दानप्रभृत्या U H.

२ एव om. Tr.

३ ०त्तेषु Tr.

४ ०याद्द्वोदीचो Tr B.

५ Thus Tr U, ०न्निर्वर्त्य B H.

६ ०वर्तयेन्मा U.

हुताद्यमथ अन्यहुतैः मंऽसृज्येरन्सोमे वा सोममभिगृह्णीयादित्येतदेवाथ यद्यन्यहुता स्वलिङ्गो ऽन्यहुतैः मंऽसृज्येरन्दीक्षिता[1] दीक्षितैर्वान्यैश्च प्रात्यस्तोमात्सत्त्वाच्चेत्येतदेवाथ यदि सुतः सोमो ऽभिहृष्येत[2] तदित्पदं[2] प्रत्यस्मै पिपीषत इत्येताभ्यां सुवाहुती हुत्वा[3] तस्य[3] नित्यभक्षमनुवर्तयतीन्दुरिन्दुमवागादिन्दोरिन्द्रो ऽपात् । तस्य त इन्द्रविन्द्रपीतस्य मधुमत उपहूतस्योपहूतो भक्षयामीत्यथ यदि सुते सोमे यजमानो म्रियेत भयं वागच्छेत्सर्वाणि हवींष्यपि पात्राणि समवधाय द्रोणकलशे सोमं जुह्वामाज्यं पशुमन्यस्यामित्येकामाहुतिं जुहुयाद्ये[4] देवा येषामिदं भागधेयं बभूव येषां प्रयाजा उतानूयाजाः । इन्द्रज्येष्ठेभ्यो वरुणराजभ्यो ऽग्निहोतृभ्यो देवेभ्यः स्वाहेति हुत्वात ऊर्ध्वं पैतृमेधिकं कर्म प्रतिपद्येताभये[5] वा[6] पुनर्यजेत जीर्णस्याप्रकृतस्य[7] चाग्निहोत्रचेष्टायामात्मन्यग्निसमारोपणं[7] विद्यत इत्यात्मनि समारूढेष्वग्निषु[8] न खादेन्न पिबे-

१ ॰दीक्षितो B H U

२ ॰हृष्येततदित्पद H, ॰हृष्येत्तदित्पदं B U, ॰हृष्येत्तदित्पद Tr

३ जुहुयात्तस्य Tr.

४ जुहोमि ये Tr.

५ ॰पद्यतेभये Tr.

६ H. om. वा ; it is added sec. om. in U and found in B Tr.

७ Thus Tr, ॰तस्याग्निहो॰ H U B.—॰मन्यग्निसमा॰ Tr, ॰त्मसमा॰ B U H.

८ स्वग्निषु om Tr

नोपरि शय्यायां[1] शयीत नाप्सु निमज्जेन्न मैथुनं व्रजेत्कामं खादेत्कामं पिबेत्कामं त्वेवोपरि शय्यायां[1] शयीत नैवाप्सु[2] निमज्जेन्न मैथुनं व्रजेदिति[3] । प्रक्षालितपादपाणिरप आचम्य प्राङ्मुख उपविश्याग्निहोत्रयजुषा[4] यावन्मात्रं व्रतयित्वा तूष्णीं भूयो व्रतयेत्प्रजापतिं मनसा ध्यायन्नित्येवमेवोपासीता शरीर-विमोक्षणात्[5] । ॥ ५ ॥ चतुर्थः ॥

अथ वै भवति[6] यथा वै पुत्रो जातो म्रियत एवं वा एष म्रियते यस्याग्निरुख्य उद्वायति । यन्निर्मन्थ्यं कुर्याद्विच्छिन्द्याद्भ्रातृव्यमस्मै जनयेत्स एव पुनः परीध्यः । स्वादेवैनं योनेर्जनयति । नास्मै भ्रातृव्यं जनयतीति ब्राह्मणम् । उख्यश्चेदुद्वायेदप्सु भस्म प्रवेश्योखाꣳ शकृत्पिण्डेन परिलिप्य पुनरेवैनां[7] प्रवृज्य परिदायाहुतिपात्रं ह्लायैनाꣳ[8] स्रुवाहुतिभिरभिजुहोति[9] सुवर्न घर्मः स्वाहा सुवर्नार्कः स्वाहा सुवर्न शुक्रः स्वाहा सुवर्न ज्योतिः स्वाहा सुवर्न सूर्यः स्वाहेत्यर्कवतीभ्यामर्कमभिधावन्त्या-

---

१ शय्यायां H B U.
२ नैवाप्सु B U (H def.).
३ इति om. Tr.
४ Thus the Vtv., ॰होत्रं यजुषा the MSS.
५ ॰वि॰ om B H U.
६ See T S. V. 7. 5. 1.
७ पुनरेवैनं B, पुनरेवास्यां Tr.
८ ॰थैनं Tr, ॰थैनां B.
९ ॰हुतीभि॰ Tr H U.

दधात्यर्कः पवित्रं पवित्रमर्को रजसो विमान इति द्वाभ्यां । मुञ्जकुलायप्रभृतिना कर्मणा प्रतिपद्येता कृष्णाजिनवाचनादन्धं वै भवति तमो वा एतं गृह्णाति यस्याग्निरुख्य उद्वायति । मृत्युस्तमः । कृष्णं वासः कृष्णा धेनुर्दक्षिणेति । कृष्णं वासः कृष्णां धेनुꣳ शतमानꣳ[1] हिरण्यमिति ददाति[2] । तमसैव तमो मृत्युमपहते । ऽथो तेजो वै हिरण्यं । तेज एवात्मन्धत्त इति ब्राह्मणमथ यद्यासन्दी शिक्यमगारं वा दह्येत वैश्वानरीभिः समिधो ऽभ्यादध्याद्वैश्वानरो न ऊत्यैत्येतेनाष्टर्चेनाथ यदि वसतीवरीकलशः[3] पात्रेजन[4] एकधनाः[4] कुम्भेष्टकाः कपनेष्टका[5] वा परासिच्येरन्यूपो वा भिद्येत रशना वा छिद्येत चषालं वा भिद्येतौदुम्बरी वा भिद्येत ग्रावा वा भिद्येत द्रोणकलशो वा दीर्येतान्यद्वा यज्ञे दारुमयं मृन्मयं[6] वा पात्रं भिद्येत तत्स्वेनैव यजुषा स्व[7] आयतने[7] निधायोपधायाभिमन्त्रयते[8] भूरायुर्मे धारयत प्राणं मे धारयत प्रजां मे

---

१ Tr ins च ।

२ Found in Tr only and in a citation in the Mahāgnisarvasva.

३ Thus Tr, the Viv and the Prāy Candrikā, वसतीवरकल० H U, वसतीवर कल० B

४ Thus B and the Prāy Candrikā, पात्रेजना H, पात्रेजनीरेक० U, पत्रेजनीरेक० Tr.

५ Thus Tr B, कथने० U, कपने० H.

६ मृण्मयं Tr.

७ Thus Tr. and the Viv. स्वस्थाने U, स्वस्थानि B H.

८ Thus Tr, निधायोपधायाभि० B, निधायोपधायाभि० H U.

धारयत पशून्मे धारयत मा म आयुः प्राणः प्रजाः पशवः परामिच्चेरन्नित्यथ यदि दारुमयं पात्रमाहवनीये[1] ऽनुप्रहरेदथ[2] यदि[2] मृन्मयमपो[3] ऽभ्यवहरेद्भूमिर्भूमिमगान्माता[4] मातरमप्यगात्। भूयास्म पुत्रैः पशुभिर्यो नो द्वेष्टि स भिद्यतामिति ॥ ६ ॥ **पञ्चमः** ॥

[5]अथातोऽग्निहोत्रस्य लौकिकविधिं व्याख्यास्यामः पुराग्निहोत्राद्गार्हपत्यादरण्योरग्नीन्समारोपयन्त्यथ[6] ते योनिर्ऋत्विय इत्यन्तर्वेद्यरणी निधाय लौकिके[7] ऽग्नौ जुहुयात्सायमुद्धरति[7] सायमाहुतिं हुत्वा[8] प्रातरुद्धरति प्रातरुद्धरति प्रातराहुतिं हुत्वेति विज्ञायते ऽथाग्निहोत्रं चतुर्भिर्लुप्यते[9] होमोपस्थानव्रतदर्शपूर्णमासैरिति तन्तुमत्येष्ट्वा[10] दर्शपूर्णमासाभ्यां यजेत संतिष्ठते विच्छिन्नप्रायश्चित्तिः[11] ॥ ७ ॥ **षष्ठः** ॥

---

१ After पात्र H U B ins. भिन्नम्।

२ अथ यदि om. Tr.

३ मृण्मय Tr.

४ ०वहरेद्भूमि० H U.

५ The first part of this kh. differs considerably in the MSS. I have given the text of Tr, which, on the whole, agrees with the Vivaraṇa.

६ पुराग्निहोत्रस्य कालाद्गार्हपत्यमस्मिनारण्यौ मरुत्सुष्मा (or मरुत्स्पर्शा)रण्योः समारोपयत्यथ B U H.

७..७ लौकिकमग्निमाहृत्य सायमुद्धृत्य B U H.

८ इति विज्ञायते ins. B U H.

९ Thus the Viv., ०र्लुप्येत the MSS.

१० इष्टा om. Tr.

११ Thus Tr and the Vivaraṇa; ग्निहोत्रस्य लौकिकविधिः B U H.

अथाप्यग्निहोत्राणाꣳ[1] समासस्तद्यथा राष्ट्रविभ्रमो व्याधयो ऽध्वगमनं गुरुकुलवासो देशकालद्रव्यानुपपत्तिरन्यैर्वायोगो[2] यासु[3] विद्यत इति । तस्य कः कर्मण उपक्रमो भवतीति । कामं पूर्वाह्णे वापराह्णे वाग्निहोत्रवेलायां वा यथासूत्रं[4] वा कुर्यात्प्रसिद्धं वा[4] यजमानस्या प्रमावात्प्रसूतः[5] प्रसिद्धं प्रतिपदि भाय[5] चतुर्दश चतुर्गृहीतानि गृह्णाति सोपवसथे पार्वणे वाथेतरस्मिन्पञ्चदश[6] । प्रसिद्धꣳ सर्वꣳ समित्प्रभृति कर्म । मन्त्राꣳश्चैकवत्सꣳस्थाप्य सायमग्निहोत्राणि[7] कृत्वा प्रातरग्निहोत्राणि[8] जुहुयात्सायमुपक्रमः प्रातरपवर्गः । काले[9] पार्वणे न यजेत । नोर्ध्वं[10] पाक्षिकात्समासो न प्रसङ्गे नाश्रद्दधानस्याथाप्युदाहरन्ति[11]

---

१ Thus Tr and the Viv , अथाप्यग्नि० B U H.

२ Tr ins होम after ०कात्र० ।

३ Thus H U, यासु Tr (grantha !), वान्यासु B

४ Instead of these four words Tr प्रसिद्ध only

५..५ Thus Tr, प्रवमत प्रसुत प्रतिपदीष्टाय U H, प्रवमत् प्रतिपदि भाय B.

६ वा only in Tr

७ Thus U, ०त्राणा Tr B H.

८ Thus U, ०त्राणां Tr B, ०त्राणा H.

९ कालेष H

१० Thur Tr, नोर्ध्वं B U H.

११ Thus Tr, ०दधानस्य यथाप्यु० B, ०दधाननेव B ०दधानेनेव U (the last two om. यथाप्युदाहरन्ति)

अश्रद्धा परमः[1] पाप्मा पाप्मा ह्यज्ञानमुच्यते ।
अज्ञानाल्लुप्यते धर्मो लुप्तधर्मोऽधर्मः[2] स्मृतः ॥
श्रद्धया शुध्यते बुद्धिः श्रद्धया शुध्यते मतिः ।
श्रद्धया प्राप्यते ब्रह्म श्रद्धा पापप्रणाशिनी[3] ॥

तस्माच्छ्रद्दधानेनाप्रसङ्गेन[4] संपन्ने[4] काले[4] तन्त्रमत्या यजेतैवं लौकिकप्रयोग एवमङ्गत एवं विध्यपराधे चाथाप्युदाहरन्ति न वृथाग्नीनुद्वासयेन्नैवानापत्सु । वीरहा वा एष देवानां योऽग्निमुद्वासयत इति । तस्माच्छ्रद्दधानस्याप्रासङ्गिकस्य[5] चान्यत्रापि[6]

येये विशेषा लघवो यत्रयत्रोपलक्षिताः ।
तैः कर्मसङ्करे[7] कुर्यान्न्यायोपेतं यथा भवेत् ॥
स्वशास्त्रे विद्यमाने[8] यः परशास्त्रेण वर्तते ।
भ्रूणहत्यासमं तस्य स्वशास्त्रमवमन्यतः ॥
आर्षेयस्य स्वशास्त्रस्य प्रदेशास्तद्गुणैः समाः ।
कर्मणां प्रविचारार्थमापत्सु च समाप्नुयादिति ॥ ८ ॥

---

१ परमा MSS.

२ Thus B H U, धर्मः Tr.

३ Thus Tr, ॰प्रनाशिनी U, ॰प्रमोचनी B H.

४ ? Thus Tr (only सपन्नेन), ॰प्रसङ्गेन प्रसंगेन सपन्नेकाले U, ॰प्रसंगेन काले B H; the Viv. also has प्रसन्नेकाले ।

५ ? Thus H U, ॰धानस्याप्रसंगिक॰ B, ॰धानेनाप्रसंगिकस्य Tr.

६ Thus Tr, ॰कस्यान्यत्रापि B, ॰कस्य च अन्यत्रापि U, ॰कस्य च H.

७ Thus B U H, ॰सङ्करेः Tr.

८ ॰माने H U.

यथो एतस्मो ऽपरिमितं प्रवसति न संवत्सरमति प्रवसतीत्यविशेषाज्जायापत्योराहिताग्न्योरित्येवेदमुक्तं भवति । विज्ञायते चार्धो वा एष आत्मनो यत्पत्नीत्यथ यदि प्रवसति यजमाने पत्न्याः प्रवासनिमित्तꣳ स्यात्तदास्तोष्यतीयꣳ कृत्वाध्वर्युः समारोपयेदयं ते योनिर्ऋत्विय इति । यत्र गच्छेत्तत्रानो हरेत्तत्र प्राप्याग्निं[१] मथित्वा विहारं कल्पयित्वा गार्हपत्य आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये संततीं जुहोति मनो ज्योतिर्जुषतामाज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु । या इष्टा उषसो निम्रुचश्च ताः संदधामि हविषा घृतेन स्वाहेत्यथाग्नये तन्तुमते पुरोडाशमष्टाकपालं निर्वपति । शरावं दक्षिणां ददाति । सा प्रसिद्धेष्टिः संतिष्ठते । ऽथ यदि यजमानस्यैव[२] पत्नी चोभौ त्वेव[३] निष्क्रामतो ग्रामान्ते ग्रामसीमान्ते वा वसतो[४] ऽग्निहोत्रमेव[४] लुप्येताविकृतमग्न्याधेयं कुर्वीतानीन्हरन्तो नोच्छ्वसेयुर्यद्युच्छ्वसेयुरग्नयो लौकिकाः संपद्येरन्नो विना समारूढेष्वग्निषु[५] नाद्रियेत[५] ग्रम्याप्रासे[६] मन्त्रनिदर्शनात्[६] । ॥ ९ ॥ सप्तमः ॥

---

१ प्राप्य only in Tr.

२ °नस्य H U

३ त्वेवमेव H U

४ ? Thus B, वसातेग्नि° Tr, वसेताग्नि° U, वसत्यग्नि° H, वसेते the Vivarana.

५ स्वग्निषु नाद्रियेत om Tr.

६ ? गम्याप्रवासेमन्त्रनिद° Tr, गम्याप्रासेमन्त्रेतनद° B, गम्याप्रासेनदोमन्त्रनिद° U, गम्याप्रासेनदोत्लनिद° H.

अथ वै भवति सर्वान्वा एषो ऽग्नौ कामान्प्रवेशयति यो ऽग्नीनन्वाधाय व्रतमुपैति स यदनिष्ट्वा प्रयायादिति । स यदनिष्ट्वा प्रयास्यन्भवति तद्गार्हपत्य[1] आज्यं विलाप्योत्पूय स्रुचि चतुर्गृहीतं गृहीत्वाहवनीये जुहोत्यन्वारब्धे यजमाने तुभ्यं ता अङ्गिरस्तमेति । यो ऽग्नीनन्वाधाय व्रतमुपैति स यदुदायतीति तत्पुरस्ताद्व्याख्यातं । यस्याहिताग्नेरग्निरपक्षायति यावच्छम्यया प्रविध्येद्यदि तावदपक्षायेत्तꣳ संभरेदिदं त एकं पर उ त एकमिति । संभृत्यानुप्रहरेदग्निहोत्रकालेषु[3] वान्येषु[3] वा[2] । यदि परस्तरामपक्षायेदनुप्रयायावस्येदित्यनुप्रयायावस्येत्तत्रैवावस्येत्तत्र[4] वोदासयेयुरोषधीर्वा[4] एतस्य पशून्वयः प्रविशन्ति यस्य हविषे वत्सा अपाकृता धयन्ति । तान्यदुह्या यातयाम्ना हविषा यजेत । यत्र दुह्याद्यजपद्दक्षारियादायव्यां यवागूं निर्वपेदित्यथैतेषां दोहयित्वा[5] तस्मिन्नप आनीय नीहिमुष्टिं सिद्धमत ऊर्ध्वमथ यस्य सायं दुग्धꣳ हविरार्तिमार्च्छेदिन्द्राय व्रीहीन्निरुप्योपवसेदिति । निर्वपणान्तं[6]

---

१ Thus B, तद्गार्ह॰ H U, गार्ह॰ Tr.

२ ऊ Tr. H.

३ Thus Tr U and the Viv. (only चान्येषु instead of वा॰), कालेषु वा H, कालेचान्येषु वा B.

४ Thus H U, ॰वस्येत्तत्रैवावस्येरोषधी॰ Tr, ॰वस्येत्तत्रैवास्योषधी॰ B.

५ किंचिद् ms. Tr and the Viv.

६ निर्वापणान्त Tr, निर्वापणं Viv.

कर्म कृत्वा श्वो भूत आग्नेयेन प्रचर्यैन्द्रेण प्रचरेच्छृतस्थानं तत्कुर्यादथ[1] यस्योभयꣳ हविरार्तिमार्च्छेत्यैन्द्रं पञ्चशरावमोदनं निर्वपेदिति । प्रकृत्या वा निर्वपेच्छरावेण वेति । प्रकृत्या[2] निर्वपेत्तथा[3] शरावपरिमाणार्थꣳ शरावमिति वदन्तस्तथा[3] चतुष्पात्रं निर्वपेदित्यथ पात्र्यामेव निर्वपेत्सांनाय्यस्थाने[4] कुर्यादस्य[5] मत्ये ऽहन्पत्न्यनालम्भुका भवति तामपरुध्य यजेतेति । तामपरुध्यैव[6] यजेत सर्वेणैव यज्ञेन यजते । तामिष्ट्वोपह्वयेतामू[7] हमस्मीत्यृतुकाल[7] उपगमनमन्त्रो । ऽग्न्याधानप्रभृत्यपरुध्यैव यजेत तथैकाहानाम् । ॥ १० ॥ **नवमः** ॥

अथ यदि[8] दीक्षोपसत्सु[8] तथाहर्गणेष्वन्येष्वहःसु वा[9] यया[9] ग्रहे पर्यवेते गोमूत्रेणोष्णोदकमिश्रेण लोहितं क्लिन्स्नेत्युक्त्वा[10]

---

१ Thus Tr and B, U and H read (after कृत्वा) येनाग्नीध्रीकूपे ममुष्याद्भिरभ्युक्ष्यामजर्वेदथ वागते मधुमादर्यत्प्रोक्षणप्रभृतिना कर्मणा प्रतिपद्येत सिद्धमत ऊर्ध्वमथ यस्योभयꣳ etc.

२ These three words not in Tr.; प्रकृत्येव B

३ तथा not in Tr.

४ After निर्वपेत् Tr has : न प्रकृत्या प्रसिद्धमाग्नेयेन प्रचर्यैन्द्रेण प्रचरेत् ।

५ कुर्यात् only in Tr.

६ एव not in Tr.

७ ॰येतामोहम॰ U and the Viv. (pr. m.) ॰येतेत्यमोहम॰ Tr, but cp. T Br. III. 7. 1. 9.

८ यदो॰ Tr, यदी॰ B.

९ ? वाच Tr.

१० ? क्लिन्से॰ Tr, क्लिं॰ B H U and the Viv.

प्रचाल्य दर्भपुञ्जीलैः पवयतीति । विज्ञायत आपो वै दर्भास्तैर्हि[1] स्नाता भवतीति । विज्ञायते ब्रह्महत्यायै ह्येषा वर्णं प्रतिमुच्यास्त इति । तस्माद्दुर्विनान्वीक्षेत न स्पृशेदित्यथ सूतिकायाः[2] दशाहे पर्यवेते यथाम्नातꣳ शौचं कृत्वा पत्नीं कर्मसु योजयेत्तत्कर्म पुत्रो[3] ब्रह्मचारी वा कुर्यात्तन्मन्त्रं यजमानो जपेदेषा पत्न्यकुशली[4] यदि स्यादेवमेव कारयेदित्यथ यदि[5] सांनाय्ये घर्मे वा प्रवृत्तायां पयो न स्यादेन[5] केन चिदुपायेन किंचित्पयो[6] दोहयित्वाद्भिः सꣳसृज्य प्रचरेन्नैवान्यत्पय आनीय कुर्यात्तेन ततः[7] प्रायश्चित्तिरथ यदि सोमाधानमारभ्य पुरा[8] दीक्षणीयाया अनालम्भुका भवति नाग्निहोत्रं जुहोति । त्र्यहे पर्यवेते[9] ऽग्निहोत्रप्रभृति सिद्धमत ऊर्ध्वमथ यदि पुरा व्रतदोहनादनालम्भुका भवति त्र्यहꣳ हविष्यमश्नीयाद्यदि व्रते[10] दुग्धे[10] हविष्यमेव[11] व्रतमपो ऽभ्यव-

१ Thus H U, दर्भा इति तैर्हि B, दर्भा इति तेन Tr.

२ Thus H °कायां Tr B U.

३ तत्पुत्रो Tr.

४ Thus Tr and U (sec. m.); कुशली B H U (pr. m.).

५..५ Thus Tr; सांनाय्य वा घर्मो वा प्रवृत्ता नस्याद्येन B, सांनाय्ये वा घर्मे वा प्रवृत्तायां पयो नस्याद्येन U, H is corr but reads at the end पयोनस्याद्येन ।

६ किंचित्कस्मिन् Tr.

७ तत्र B H.

८ पुरस्ताद् Tr.

९ यथाम्नातं शौचं कृत्वा ins. U.

१० Thus B U H and the Viv., °त दुग्ध Tr.

११ Only in Tr.

हरेत् । श्वेऽ[1] पर्यवेते गोमूत्रादि सिद्धमत ऊर्ध्वमथ[1] यदि पुरा प्रवर्ग्यस्य[2] स्यान्न[2] प्रवृञ्ज्याद्धविष्यप्रभृति यथाम्नातꣳ शौचं कृत्वा गोमूत्रादि सिद्धमत ऊर्ध्वमथ यदि प्रवृक्ते[3] ऽनालम्भुका भवति हविष्यमेव[4] तदहः[4] सꣳस्थाप्य श्वेऽ[5] पर्यवेते गोमूत्रादि सिद्धमत ऊर्ध्वमथ[5] दीक्षित वाचं यच्छ व्रत्य वाचं यच्छ[6] पत्नि[6] वाचं[6] यच्छेति संप्रैषादेकस्तनप्रभृत्यानालम्भुका[7] भवति सिद्धमावभृथात्कृत्वा श्वेऽ पर्यवेतेऽवभृथमवयन्ति । सुत्येऽहनि मार्जालीये सिकतोपोप्ते परिश्रित्योपविशेदन्येष्वहःसु पत्नीशालायामेवोपविशेत्प्राग्वꣳशं[8] न प्रपद्येत ॥ ११ ॥ दशमः ॥

अथातः प्रायश्चित्तसमुच्चयं व्याख्यास्यामः । सर्वत्रानादिष्टेषु मनस्वती मिन्दाहुती व्याहृतयो होतार इति जुहुयात्सर्वेष्वव्रत्येषु[9] मिन्दाहुती पितृयज्ञलोपे सप्तहोतारमिति[10] जुहुयादथ[10] यद्यग्न्याधेये सर्वमौपासनमभिप्रव्रजेयुः पुनस्त्वादित्या रुद्रा वसवः समिन्धतामित्येतया स्रुवाहुतिꣳ हुत्वा[11] लौकिके

१ श्वे..ऊर्ध्वम् only in Tr
२ ? Thus U B, प्रवर्ग्यस्य न Tr, प्रवर्ग्यस्यासन्न H.
३ प्रवृक्ते MSS. and Viv.
४ Thus Tr, ॰पसेतदह B H U
५ Instead of श्वे..ऊर्ध्वम् Tr has only सिद्धम् ।
६ Only given by Tr.
७ Thus Tr, संप्रैषादेक॰ B H U
८ उपविशेत् om. H U.
९ Thus Tr, ॰षु व्रत्येषु B U H.
१० इति जुहुयात् in Tr only.
११ तस्मिन् ins. Tr.

ऽग्नौ गृह्याणि कर्माणि प्रयुञ्जीत[1] यद्यर्धमवशिष्येताथ[2] यदि बह्वौदनिको धारितः स्यादौपासनवत्स्यात्तथोद्धाते पाकादूर्ध्वं जयादींश्च जुहुयादथ यदि गार्हपत्यमनाहितमादित्यो ऽभ्युदियादादित आरभ्यान्यस्मिन्काल आदध्यान्मध्ये चेदग्निविनाश एतदेवाथ[3] यदि पत्नीमृत्विय[4] विन्देत प्राग्दक्षिणाया एतदेवात ऊर्ध्वमपरोधो ऽग्निहोत्रे च सोमे[5] चावभृथादिषु[5] सर्वेष्टिपशुसोमेषु[6] तावन्मात्रं[7] पत्न्या वा सर्वमथ यदि गार्हपत्याहवनीयावुद्वायेतामभिनिम्रोचेदभ्युदियाद्वाग्न्याधेयं[8] तत्र प्रायश्चित्तिः । पुनराधेयमित्येके । ऽथ[9] यदि पत्नी बहिः सीमां पुनराधानमथ यद्यात्मनि समारूढेष्वनत्यं चरेदरणिविनाशोक्तदोषो[10] वा[11] भवेदग्न्याधेयमरणिविनाशेनाग्निविनाश[12] उक्तो । ऽथ यदि ग्राममर्यादां नदीं वाग्नीननिर्हरेयुरेताने-

---

१ अथ ins. Tr.

२ Thus H U, ॰शिष्येदथ Tr, ॰शिष्येतानग्निन्कुर्यादथ B.

३ अथ in Tr only.

४ Thus Tr, पत्नृत्विय B U H.

५ Thus B H, सोमे चावभृथात् U, सोमेनावभृथादिषु Tr.

६ Thus Tr B, सर्वेष्टि॰ U H.—॰सोमेषु Tr B, ॰तन्त्रेषु U H.

७ च ins. U H.

८ Thus Tr, आहवनीयगार्हपत्यावु॰ B U H.—उद्वायेताम् Tr.

९ In Tr only.

१० ॰दर्शी B U H.

११ In H U only.

१२ Tr om. अग्न्याधेयम्, rightly?

वाग्नीन्ह्रियमाणानन्वारभेयातां[1] प्रवसति यजमाने न[2] पत्नी[2] प्रवसति[2] नात्र प्रायश्चित्तं भिन्नयोनिश्चेदन्वाहार्यपचन उद्वायेद्या[3] प्रकृतिस्तत[4] आहरणं पृथगरणी वा ॥ १२ ॥

अथ यद्येककपालः परावर्तेत[5] प्रजापतेर्वर्तनिमनुवर्तस्वेत्यध्वर्युः स्वस्थाने प्रतिष्ठापयेत्प्रति क्षत्रे प्रतितिष्ठामि राष्ट्रे विश्वमन्याभिवावृध इत्येताभ्यां यजमानोऽनुमन्त्रयतेऽस्कान्द्यौः पृथिवीमस्कानजनि प्राजनीत्येताभ्याꣳ स्रुवाहुती जुहुयात्संस्थिते वैश्वानरीमिष्टिं[6] निर्वपेद्विज्ञायते च यत्प्राङ्[7] पद्येत देवलोकमभिजयेद्यद्दक्षिणा पितृलोकं यत्प्रत्यग्रक्षाꣳसि यज्ञꣳ हन्युर्यदुदङ् मनुष्यलोकमभिजयेत्प्रतिष्ठितो होतव्य इत्यथ यदि पशुबन्धः सोमो वा लुप्येत वैश्वानरीमिष्ट्वा पुनर्यजेत[8] सर्वं चेत्सुत्यमपरनिक्रामेत्समन्वारब्धाः[9] प्रागुपवेशनादपच्छिद्येरन्समाप्य पुनर्यजेत सोमेन दीक्षितो न[10] दद्यान्न[10] जुहुयान्न[10] पचेन्न जपेदित्यादित[11] एव विभजेदित्याहुर्मैतो-

१ Instead of एतानेव B U H एतदेव ।

२ Thus Tr, B om. न, प्रवसति H, S प्रवसति वा U

३ Thus Tr B, ॰येद्या U H.

४ Instead of तत Tr तद् ।

५ पराडावर्तेत Tr.

६ इष्टिम् alone in Tr.

७ प्राक् H

८ एकाहेषु ins. U.

९ After ॰क्रामेत् U ins सर्पेणे ।—Instead of ॰रब्धा (thus Tr.) ॰रब्धा वा U, रब्धा वा H B.

१० न जुहुयान्न दद्यान्न Tr.

११ इति om. Tr.

ऽग्नौ गृह्याणि कर्माणि प्रयुञ्जीत[1] यद्यधर्मवाग्निर्य्येतार्थ[2] यदि ब्रह्मौदनिको धारितः स्यादौपासनवत्स्यात्तयोदाते पाकादूर्ध्वं जयादीश्च जुहुयादथ यदि गार्हपत्यमनाहितमादित्यो ऽभ्युदियादादित अरण्यान्यस्मिन्काल आदध्यान्मध्ये चेदग्निविनाश एतदेवार्थ[3] यदि पत्नीमृत्विय[4] विन्देत प्राग्दक्षिणाया एतदेवात ऊर्ध्वमपरोधो ऽग्निहोत्रे च सोमे[5] चावभृथादिषु[5] सर्वत्रेष्टिपशुसोमेषु[6] तावन्मात्रं[7] पत्न्या वा सर्वमथ यदि गार्हपत्याद्धवनीयावुद्यायेतामभिनिम्रोचेदभ्युदियाद्वान्वाधेयं[8] तत्र प्रायश्चित्तिः । पुनराधेयमित्येके । ऽथ[9] यदि पत्नी बहिः सीमां पुनराधानमथ यद्यात्मनि समारूढेष्वव्रत्यं चरेदरणिविनाशोक्तदोषो[10] वा[11] भवेदन्वाधेयमरणिविनाशेनाग्निविनाश[12] उक्तो । ऽथ यदि ग्राममर्यादां नदीं वाग्नीनतिहरेयुरेताने-

१ अथ ins Tr.

२ Thus B U, ॰ग्निर्योदय Tr, ॰ग्निर्येतानग्निन्कुर्यादथ B.

३ अथ in Tr only.

४ Thus Tr, पत्न्यृत्विय B U H.

५ Thus B H, सोमे चावभृथात् U, सोमेनावभृथादिषु Tr.

६ Thus Tr B, सर्वेष्टि॰ U H.—॰सोमेषु Tr B, ॰तंत्रेषु U H.

७ च ins. U H.

८ Thus Tr, आहवनीयमार्हपत्यावु॰ B U H.—उद्वायेताम् Tr.

९ In Tr only.

१० ॰दोषौ B U H.

११ In H U only.

१२ Tr om. अन्वाधेयम्, rightly?

